(श्रीमद्) भगवद् गीता — with the commentary
सार संग्राहिका by स्वामी हनुमद्दास
षट्शास्त्री.
मुजफ्फरपुर, 1951.





# श्रीमद्भगवद्गीता

## सारसंग्राहिकाटीकासमलङ्कृता







टीकाकारः प्रकाशकः सम्पादकश्च—

## स्वामी हनुमद्दासः षट्शास्त्री



प्रथमं संस्करणं १००० सङ्ख्यापरिमितम्

| | | |
|---|---|---|
| मातृ-नवमी<br>२००८ विक्रमाब्दः | १९५१<br>ईशवीयाब्दः | अमू<br>वितर्ण |

पुस्तक-प्राप्तिस्थानम्—

महन्त श्री श्रीनन्दनदासजी

पो० मु० चकना ( मठ )

जि० मुजफ्फ़रपुर।



ॐ

"कृषिर्भूवाचकः शब्दो णश्चानन्दवाचकः।
तयोरैक्यं परं ब्रह्म" कुरुतात्सर्वमङ्गलम् ॥ १ ॥
कर्षणात्सर्वपापानां तापानां विनिवारकः।
परमानन्दरूपो यो हरिस्तं शरणं श्रये ॥ २ ॥
"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ ३ ॥
गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता" ॥ ४ ॥




मुद्रक—
केशव कृष्ण पावगी
हितचिन्तक प्रेस,
रामघाट, बनारस सिटी।

# समङ्गलं निवेदनं शुभाशिषश्च

“पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं,
नानाख्यानककेसरं हरिकथासम्बोधनाबोधितम् ।
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा,
भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे ॥ १ ॥

भवगहनकृशानुं मतितिमिरसुभानुम् ।
सुखसकलनिदानं गतनिखिलविगानम् ॥ २ ॥

हरिमजरममानं गुरुगरिमसमानम् ।
सुरनरमुनिसेव्यं हृदि भजति जनोऽयम् ॥ ३ ॥

“कृषिर्भूवाचकः शब्दो णश्चानन्दवाचकः ।
तयोरैक्यं परं ब्रह्म” तस्मै सर्वात्मने नमः ॥ ४ ॥

कदाचित्तद्विचाराऽर्थो भाष्यादिसारसङ्ग्रहः ।
कृतस्तस्य प्रकाशोऽपि जातो जनहितेच्छया ॥ ५ ॥

अपूर्वोऽत्र क्वचित्कश्चिद् विद्यते तं विलोक्य वै ।
कस्याप्यस्माद्भवेत्साक्षाद्बोधोऽहमिति भावये ॥ ६ ॥

रामेश्वरेण सद्भ्या मदन्तेवासिना सता ।
पूर्वरूपस्य संशुद्धिः यत्नेन विहिता शुभा ॥ ७ ॥

सिम्भारीग्रामवास्तव्यैः पाटलिपुत्रमण्डले ।
भक्तैर्गुर्जरदेशीयैरन्यैः सत्पुरुषैस्तथा ॥ ८ ॥

श्रद्धया स्वर्पितै रूप्यैर्ग्रन्थस्यास्य प्रकाशनम् ।
सम्पन्नमिति चैतेषामहं भव्यं हि भावये ॥ ९ ॥

— टीकाकारः

# श्रीमद्भगवद्गीतायाः —

## अनुक्रमणिका



समस्तश्लोकसङ्ख्या ७००

# किञ्चित् प्रास्ताविकम्

इह खलु विदितचरमेव विपश्चिद्वर्य्याणां यज्जिहासितमपि त्रिविधं दुःखमाधिभौतिकादिभिरुपायैरपि कैश्चिद् नीतिनिपुणैः कर्मकलापकुशलैश्चापि सर्वथा परिहातुं न शक्यते, तेषां वस्तुतोऽनुपायत्वादेव। "ज्ञात्वा देवं मुच्यते सर्वपाशैः" "तमेव विदित्वाऽतिमृत्युमेति" "तरतिशोकमात्मवित्" इत्यादिश्रुतिशतैः शोकोपलक्षितसंसारविमोचनकारणमात्मज्ञानमेवेत्यवगम्यते। तच्च विशुद्धान्तःकरणाणां शमदमादिसाधनसम्पन्नानां कृतोपासनानां श्रवणमननिदिध्यासनवतामेव सम्भवति। श्रवणञ्च "श्रोतव्यं श्रुतिवाक्येभ्यः" इत्यादिप्रमाणेन वेदादेव विधेयमिति। परन्तु गम्भीरो वेदाऽर्थो न सर्वमतिविषयस्तस्य दुरूहत्वादतिसूक्ष्मत्वाच्चेति निपुणं विचार्य्य लोकानज्ञानान्धकारादुद्दिधीर्षुः परमकारुणिकः भगवान् वेदव्यासो महाभारतं विरचितवानिति नाविदितं विद्यते सचेतसां भारतीयानाम्। तत्र च विविधानि पुरुषार्थसाधनानि समुपदिष्टानि महामुनिना, महाभारतस्य माहात्म्यं मुनिवर्य्येण स्वमुखादेववर्णितम्—"यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्"। पुराणेऽप्यस्य महत्वं वेदरूपत्वञ्च निरूपितं वर्त्तते। "वेदानध्यापयामास महाभारतपञ्चमान्"। "कार्ष्णञ्च पञ्चमं वेदं यन्महाभारतं स्मृतम्" इति। अनेकरत्नाकरेऽस्मिन्—"गीता सहस्रनामानि स्तवराजो अनुस्मृतिः। गजेन्द्रमोक्षणञ्चैव पञ्च रत्नानि भारते"॥ इत्युक्तानि पञ्च प्रधानानि रत्नानि समुल्लसन्ति, तत्रापि भगवतो मुखकमलाद् विनिःसृता गीता परमप्रधानपदवीमधिरूढा वर्त्तते। एषा हि प्रचीनापि नित्यं नवीना निखिलदोषहीना विश्वजनीना समेषां शाश्वतशान्तेरनुपमं साधनमाध्यात्मिकग्रन्थेषु शिरोरत्नायमानोपनिषदाञ्च सारभूता विराजतेतरामित्यतिरोहितम्।

प्राचीना अनेके विश्वव्याख्याताः सम्प्रदायाचार्य्याः स्वान्तःसुखाय स्वानुगामिनां हितोपदेशाय चानेकानि भाष्याणि टीकाश्चास्या विविधा रचयामासुः, आधुनिका मनीषिणश्चेदानीमपि तथा कर्त्तुं यतमाना दृश्यन्ते, यतो हि को नाम विद्वान् वक्तुं शक्नुयाद् यदहमेव भगवदभिप्रेतमर्थं जानामीति, यस्य बुभुत्सोर्येन विदुषा प्रतिपादितया यया प्रक्रियया सम्यगर्थप्रतिपत्तिर्भवेत्तत्कृते सैव प्रक्रिया साधीयसी स च विद्वानज्ञानान्ध-

कारनिरासेन गुरुस्तस्येति व्याख्यातॄणां प्रयत्नाः सर्वथा स्तुत्या एव। मन्ये लोकोपचिकीर्षयैव ब्रह्मविद्वरिष्ठैरस्मद्गुरुवर्य्यैः श्रीहनुमत्स्वामिपादैरेषा सारसङ्ग्राहिकाऽऽख्या टीका विरच्य प्रकाशिता। नामत एवेयं पूर्वाचार्य्यकृतभाष्यादिसारभूतेति प्रतिभाति, तथाप्यस्यामनेकस्मिन् स्थलेऽपूर्वत्वमपि दृश्यते। अथ चोपनिषदां सारभूताया गीताया नितरां निगूढात्मतत्त्वप्रतिपादिकाया अर्थगाम्भीर्य्येण तद्भाष्यादीनि साधारणैः सम्यग् ज्ञातुं न[redacted]ाभि। अस्यां हि सरलया सरण्या विविधैः प्रकारैर्भाष्यादिप्रतिपादितं दुरवगममपि गीतार्थं स्पष्टं प्रतिपादितवन्त एतट्टीकाराः, क्वचिच्च रामानुजाचार्यस्यापि मतं प्रदर्शितमत्र वर्त्तते, श्रुतिस्मृतीतिहासादिप्रमाणैः सम्वलितायामस्यामनेकेषामद्वैतसम्प्रदायमाश्रित्य गीतार्थव्याख्यातॄणां प्राचां वेदविद्वरिष्ठानां पाश्चात्यानाञ्चानेकभाषाऽभिज्ञानां गीताविषयकं विचारमेकत्र समुपलभ्य कस्य सचेतसश्चित्तं चिरं न मोदमानं भवेत्?।

सानुग्रहं श्रीमद्गुरुवर्य्यैः पूर्वरूपसंशोधनकार्ये नियुक्तस्य मम चैतत्समवलोकनादेव गीताविषया विविधाः सन्देहा निरस्ता इति मामकः परमो लाभ इदानीमपि जातः। एवमन्येषामपि सहृदयानां भविष्यति मनःसमुल्लासोऽज्ञानविनाशः सदर्थप्रकाशश्चेति मे विश्वासः, किं बहुना विज्ञानां लोचनगोचरतामुपगतैवैषा वर्त्तते। अहन्तु—

वेदप्रमाणसहिता च पुराणपूता, भाष्यादिसारमतसङ्ग्रहतः प्रभूता।
श्रीस्वामिना बुधजनोपचिकीर्षुणैषा, टीका कृता हनुमता विदुषां वरेण ॥१॥
गीतापयःसमवमन्थनतो नवोत्थं व्याख्यानमेतदमलं नवनीतमस्ति।
सेतुस्तथा तदभिधेयपयोधिपारं गन्तुं विधेयमनसां मनसां सुखाय ॥२॥

इति मन्यमानोऽथ मानवसुलभप्रमादाद् बुद्धिदृष्टिमुद्रणादिदोषाच्च जाता अशुद्धीर्विद्वांसः क्षमन्तामिति सविनयं तान्प्रार्थयमानो विश्वभावनं भगवन्तं तद्बोधकं गुरुञ्चानुस्मरन् विरमामि। ॐ शान्तिः शान्तिः शान्तिः॥

अनन्तचतुर्दशी
२००८ विक्रमवत्सरः

—रामेश्वरानन्दः
काशीकबीरचौरास्थः

ॐ

श्री सच्चिदानन्दाय सर्वात्मने नमः ।

सारसंग्राहिकाटीकासमलङ्कृता

# श्रीमद्भगवद्गीता

## मङ्गलाचरणमनुबन्धाश्च

नित्यानन्दं हरिं वन्दे रामं रसमनुत्तमम् ।
सद्गुरुं परमाद्वैतं व्यापकं ब्रह्म मङ्गलम् ॥ १ ॥
गोविन्दं गोपतिं पूतं गीर्वाणगुरुमव्ययम् ।
अनन्तं सर्वलोकानां श्रेयसः संविधायकम् ॥ २ ॥
अव्यक्तं व्यक्ततापन्नं माययाऽनृतयाऽनृताम् ।
कुर्वन्तं विविधां लीलां सर्वज्ञं संश्रयाम्यहम् ॥ ३ ॥
काण्डत्रयात्मको वेदो यथा गीता तथैव हि ।
काण्डत्रितयसंयुक्ता भक्तियोगसमन्विता ॥ ४ ॥
यथाऽधिकारं सर्वेषा हितमत्र निरूपितम् ।
ज्ञान-वैराग्य-संन्यास-योग-यज्ञ-क्रियादिकम् ॥ ५ ॥
सगुणा निर्गुणा चैव द्विधा भक्तिः समीरिता ।
प्रवृत्तञ्च निवृत्तञ्च धर्मं सर्वमुवाच ह ॥ ६ ॥
चिदानन्दं हि सद्ब्रह्म कृत्वा सर्वं चराचरम् ।
मायया च मुनीन् मान्यानुपदेशं तदात्मना ॥ ७ ॥
कुरुते कारयन् धर्मान् वारयन्नंहसो जनान् ।
तथा चकार भक्तार्थं भगवान् भक्तवत्सलः ॥ ८ ॥
यथाधिकारं सर्वार्थप्राधान्यमस्ति यद्यपि ।
तथाप्यर्जुनदृष्ट्याऽत्र कर्मण्येवास्ति मुख्यता ॥ ९ ॥
यद्यप्यर्जुनदृष्ट्यापि भक्तिप्राधान्यसम्भवः ।
स्यात्तथापि न तस्याः स विरतोऽभूत् कदाचन ॥ १० ॥

कर्मणस्त्वभवद् युद्धाद् विरतस्तेन तं प्रति ।
साङ्ख्यभक्तियुतं कर्म प्रोक्तवान् भगवान् हरिः ॥ ११ ॥
निमित्तं तं विधायाऽत्र सर्वश्रेयो विधित्सया ।
एषा गीता समुद्भूता सर्वार्थैवेति मन्महे ॥ १२ ॥
विरक्तज्ञानिदृष्ट्याऽत्र संन्यासस्य प्रधानता ।
गृहिदृष्ट्या च मुख्यत्वं कर्मण्येव प्रदृश्यते ॥ १३ ॥
अधिकारिकदृष्ट्या तु ज्ञानकर्मसमुच्चयः ।
शुद्धजिज्ञासुदृष्ट्याऽथ श्रद्धादिषु प्रधानता ॥ १४ ॥
सर्वार्थं खलु गीताख्यं सच्छास्त्रं विश्ववन्दितम् ।
सकामाकामकर्मादिबोधकं तत्त्वशोधकम् ॥ १५ ॥
साङ्ख्यं योगस्तथा द्वैतमद्वैतमत्र वर्त्तते ।
अधिकारिप्रभेदेन सामञ्जस्यं च सर्वथा ॥ १६ ॥
अनुग्रहो ह्यनुग्राह्यो दण्डार्हो दण्ड एव च ।
ईश्वरो दण्डकश्चैव सम्यगत्र निरूपितः ॥ १७ ॥
अनुग्राहकशुद्धात्मा स्वयं सच्चित्सुखात्मकः ।
पूर्णः परमसम्प्रीतो हनुमन्तं पुनातु वै ॥ १८ ॥
सदैकत्वात्तदेवाहं भेदगन्धो न विद्यते ।
तथापि भावनादेवं भेदभ्रान्तिर्विलीयते ॥ १९ ॥
इदं शास्त्रं सुकृष्णेन प्रोक्तमर्जुनहेतवे ।
गृहीतं व्यासदेवेन सर्वार्थं च तदात्मना ॥ २० ॥
सङ्क्षेपेण सुबोधार्थं तस्य सारार्थबोधिका ।
सङ्ग्रहात्मकसद्वृत्तिः सङ्क्षिप्ता क्रियते मया ॥ २१ ॥
सद्गुरुः गुरवः सर्वे ह्यीश्वराः सर्वहृत्स्थिताः ।
अनुगृह्णन्तु कुर्वन्तु सर्वथा मङ्गलं सदा ॥ २२ ॥

# अथ श्रीमद्भगवद्गीता

## सारसंग्राहिकाटीकासमलङ्कृता

तत्र च

## प्रथमोऽध्यायः (१)

धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ! ॥१॥

धर्मादीनां प्रतिपादके महाभारते जनमेजयं प्रति वैशम्पायनस्योक्तिरियं, दशदिनानि युद्धं कृत्वा श्रीभीष्मस्य पाताऽनन्तरकथानके प्रवृत्ता, अतः पूर्वोक्तस्यापि पुनः सविशेषश्रवणाय धृतराष्ट्रस्यायं प्रश्नः, केचित्तु—"अग्निहोत्रं जुहोति, यवागुं पचति" इत्यत्र यथा पाठक्रममनादृत्यार्थक्रमानुरोधेन, यवागुं पूर्वं पचति तथैवार्थक्रमानुरोधेन व्याख्यां कुर्वन्ति । "चोदना लक्षणोऽर्थो धर्मः" ( पूर्वमीमांसासू० ) विधिस्वरूपा चोदनैव यस्य लक्षणं सोऽर्थो धर्म इति कथ्यते, "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" ( वैशेषिकसू० ) स्वर्गादेरभ्युदयस्य मोक्षस्य च यतः सिद्धिः स धर्मः । "इज्याऽऽचार दमाऽहिंसा दानं स्वाध्याय कर्म च । अयं तु परमोधर्मो यद्योगेनात्मदर्शनम्" ॥ (याज्ञवल्क्यस्मृ०) "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्" ॥ ( मनुः ) "धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः । यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः" ॥ (म० भा०) इत्यादि लक्षणलक्षितानां धर्माणां प्रयोजके क्षेत्रे, अथवा यज्ञादिरेव धर्मः "कृष्णसारस्तु चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः" इति मनूक्तेर्धर्माहे क्षेत्रे, श्रुतिस्मृतिलोकप्रसिद्धया कुरुक्षेत्रस्य

धर्मस्योपचयस्थानत्वात्, अथवा क्षात्रधर्मयुद्धप्रकरणाद् युद्धक्षेत्रे युद्धभूमौ कुरुक्षेत्रे समवेताः सम्मिलिता युयुत्सव एव योद्धुमिच्छन्त एव मत्पुत्राः पाण्डवाश्च किं कृतवन्तः, किं धर्मयुद्धं वाऽधर्मयुद्धं कृतवन्तः, इत्यादि धर्मपदेन धृतराष्ट्रः पृच्छति स्म, भगवान् व्यासश्च सर्वमङ्गलार्थं धर्मपदमादौ प्रयुक्तवानित्यादि ॥१॥

सञ्जय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥

राजा•दुर्योधनस्तदा तु ( एव ) सम्मेलनकाल एव व्यूहरचनायुक्तं पाण्डवानां सैन्यं दृष्ट्वा "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च तमाचार्य्यं प्रचक्षते ॥ आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्य्यस्तेन कथ्यते" ॥ इति लक्षणलक्षितमाचार्य्यं स्वयमेवादरेणोपसङ्गम्य नीतियुक्तं वचनमब्रवीत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य्य ! महतीश्चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

तदेव वचनमाह, हे आचार्य्य ! भवदादीननादृत्य सम्मुखे स्थितां धीमता तव शिष्येण द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां शकटाद्याकारेण विन्यस्तां पाण्डुपुत्राणामेतामासन्नां महतीं चमूं पश्य, अपरोक्षीकुरु, व्यासङ्गान्तरनिरासेन दर्शनार्था प्रार्थनेयम् ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

परसैन्यस्योपेक्षणीयता वारणार्थमाह । अत्र-अस्यां चम्वाम्,

इषवो बाणा अस्यन्त एभिरितीष्वासा धनूंषि, महान्त इष्वासा येषां ते, युधि भीमार्जुनाभ्यां समाः शूराः सन्ति, नामनिर्देशेन कांश्चिद् वदति, युयुधानः ( सात्यकिः, ) विराटः, महारथो द्रुपदश्चात्र वर्त्तते। "एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्र-शास्त्रप्रवीणश्च स वै प्रोक्तो महारथः॥ अमितान् योधयेद्यस्तु सम्प्रोक्तोऽतिरथिस्तु सः। रथस्त्वेकेन योद्धा स्यात्तन्न्यूनोऽर्द्धरथः स्मृतः॥ ४॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य्यवान्।
पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः॥ ५॥

धृष्टकेतुः, चेकितानः, वीर्य्यवान् काशिराजश्च, पुरून् बहून् जयतीति पुरुजिन्नामा, कुन्तिभोजः, कुन्तीपिता, नरश्रेष्ठः, शिवेर्गोत्रापत्यं शैब्यः षडिमे सन्ति॥ ५॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्य्यवान्।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः॥ ६॥

युधायां युद्धे मन्युः कोपो यस्य स युधामन्युनामा विक्रान्तो वीरः, उत्तममोजो बलं यस्य स उत्तमौजोनामा कश्चित् सोऽपि विक्रान्तः, वीरस्य कर्म वीर्य्यं तद्वान् सौभद्रोऽभिमन्युः, सर्वे द्रौपदेयाः प्रतिविन्ध्यादयः पञ्च, चकारादन्येऽपि महारथाः सन्ति, त्वं त्वतिरथः सर्वेषां निवारणे समर्थ इति॥ ६॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम!।
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते॥७॥

अन्येऽपि च त्वत्सहायकाः सन्तीत्याशयेनाह, हे द्विजोत्तम! अस्माकं सर्वेषां मध्ये विशिष्टा उत्कृष्टा मम सैन्यस्य सेनायां समवैतीति सैन्यं तस्य नायका मुख्या ये सन्ति तान् निबोध

( जानीहि ) संज्ञार्थं संज्ञया किञ्चिदुपलक्षयितुं तान् ते तुभ्यं ब्रवीमि, नत्वज्ञातज्ञापनार्थम् ॥ ७ ॥

भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

तानेव विशिष्टान् गणयति भवानित्यादिना, समितिं संग्रामं जयतीति समितिञ्जयः, इदं विशेषणं मध्यमणिन्यायेनोभयत्र सम्बध्यते, तच्च कर्णात्पश्चात्परिगणितयोरपि कृपाश्वथाम्नोरादर सूचनार्थमस्ति, विकर्णः स्वभ्राता, सोमदत्तस्य पुत्रः सौमदत्ति-र्भूरिश्रवाः॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

गणितेभ्योऽन्यानपि सङ्गृह्णाति,नानाविधानि शस्त्राणि (खड्गा-दीनि) प्रहरणानि ( गदादीनि ) येषां ते सर्वे युद्धे विशारदाः ( निपुणाः ) किञ्च मत्प्रयोजनाय त्यक्तं जीवितं यैस्ते जीवितमपि त्यक्तुमध्यवसिता अन्येऽपि बहवः शूराः सन्ति ।९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

स्वोत्कर्षे कारणान्तरमाह, तत् ( परबलं ) अस्माकं बल-मभिभवितुमपर्याप्तमपूर्णमनलमसमर्थमिति यतोऽस्माकं बलं प्रथि-तमहिम्ना भीष्मेणाभिरक्षितमस्ति, इदमस्मदीयं तु बलमेतेषां बलमभिभवितुं पर्याप्तं पूर्णमिति यतस्तद्बलं चपलेन भीमेनाभि-रक्षितमस्ति, अथवा अस्माकं तद्बलमपर्याप्तम् , अपरिमितमक्षोभ्यं परैरगम्यमधृष्यम् , यतोऽस्माकं भीष्माभिरक्षितम् , एतेषां तु

बलमिदं दृश्यमानमल्पं क्षोभ्यं परैर्गम्यं यतो भीमाभिरक्षितमस्ति, अथवा भवदादिभिर्भीष्माभिरक्षणं विना भीष्माभिरक्षितं तदस्माकं बलमपर्याप्तमसमर्थमस्ति भीमाभिरक्षितं त्विदमेतेषां बलं समर्थमस्ति तस्मादित्यादि परेण सम्बन्धः ॥ १० ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥११॥

यदर्थं पश्यैतामित्यादि कथितं तदिदानीं राजा कथयति, अयनेष्विति व्यूहप्रवेशमार्गेषु यथाभागं भागमनतिक्रम्य विभक्तस्वस्वस्थानमपरित्यज्य समवस्थिताः स्वस्वस्थाने सावधानेनैव स्थिताः सन्तो भवन्तः सर्वे एव सेनामध्यस्थं सेनापतिं भीष्ममेवाभिरक्षन्तु, महाबुद्धिमद्भीष्माधीन एवास्माकं विजयो भविष्यति, तस्य च शिखण्डितो नाशाऽऽशङ्काऽस्ति नान्यतः, तस्मात्ततो रक्षणीय एव सः ॥ ११ ॥



तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१२॥

एवं श्रुत्वापि तूष्णीं स्थितमाचार्यं दृष्ट्वा दुर्योधनस्य स्वस्मिन्भक्तिं चालक्ष्य स्वसेनापेक्षयाऽल्पपरसेनायामपि महत्त्वबुद्धिस्वपापादितः खिन्नस्य तस्य हर्षजनने भीष्मः प्रवृत्त इति सञ्जय आह तस्येति प्रतापवान् कुरुवृद्धः पितामहस्तस्य हर्षं सञ्जनयन् उत्पादयन् सन्नुच्चैः सिंहनादं विनद्य कृत्वा शङ्खं दध्मौ वादितवान् सिंहस्य नादो यथा स्यात्तथेति क्रियाविशेषणं यद्वा मूलकाषं कषतीतिवण्णमुलन्तः प्रयोगः ॥ १२ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३॥

ततो भीष्मप्रवृत्त्यनन्तरं शङ्खादयः सहसैव झटित्येवाभ्यहन्यन्ताऽभिहता वादिता अभवन्, स शब्दस्तुमुलस्तीव्रो महानभवत् ॥ १३ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥

स शब्दः परेषां वीररसोद्भावको जातो न तु भयजनक इत्याशयेन पाण्डवसैन्ययुद्धोत्सवमाह—ततस्तुमुलशब्दानन्तरं श्वेतैरश्वैर्युक्तेऽग्निना दत्ते महत्युत्तमे स्यन्दने रथे स्थितौ भयादिरहितौ माधवो (लक्ष्मीपतिः) पाण्डवोऽर्जुनश्चैव दिव्यौ शङ्खौ प्रदध्मतुः प्रकर्षेण वादयामासतुः ॥ १४ ॥ हृषीकाणामिन्द्रियाणामीशो माधवः पञ्चजनदैत्यप्रभवं पाञ्चजन्यं दध्मौ । अनेनेन्द्रियलक्ष्मीपतित्वात्स पाण्डवानां लक्ष्मीन्द्रियादि बलप्रदः, स एवमन्येषां च तदपहारक इति सूच्यते । धनञ्जयो दिग्विजयादौ धनादीनामाहर्त्ताऽर्जुनो देवेन दत्तं शङ्खं दध्मौ, भीमे रौद्रे कर्मणि समर्थः, अत एव दुःशासनस्य रक्तपानादिकं भीमं कर्म यस्य, तथा वृकस्योदरमिवोदरं यस्य स भीमसेनः "भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिः स्थितिः । योगः प्राणो बलं चैव वृकोदर इति स्मृतः" । एतद्दशात्मको वायुस्तस्माद् भीमस्तदात्मकः । स पौण्ड्रं महाशङ्खं दध्मौ ॥ १५ ॥ कुन्त्या दुःखापहारकः पुत्रो राज्यस्य लब्धा राजा युधिष्ठिरोऽनन्तविजय-

नामकं शङ्खं दध्मौ, नकुलः सहदेवश्च सुघोषमणिपुष्पकनामकौ दध्मतुस्तत्र नकुलः सुघोषं सहदेवश्च मणिपुष्पकं दध्मौ ॥ १६ ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ! ।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक्-पृथक् ॥१८॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥

परमः श्रेष्ठ इष्वासो यस्य स परमधनुर्धरः काश्यः काशिराजः महारथः शिखण्डी, अपराजितः पराजयमप्राप्तो महायुद्धे पारिजातहरणादौ सात्यकिश्च ॥ १७ ॥ द्रुपदादिः सौभद्रोऽभिमन्युश्च महाबाहुः, हे पृथिवीपते ! सर्वशः पृथक् पृथक् शङ्खान् दध्मुः, अत्र पाण्डवसेनाया अल्पसंख्याकत्वेऽपि तत्रत्य बहुवीराणां नामसंकीर्त्तनं शङ्खानां विशेषनामकथनादिकं च "यतो धर्मस्ततो जयः", "कथाऽपि खलु पापानामलमश्रेयसे भवेत्" इत्याद्युक्तिमाश्रित्य धार्मिककीर्त्तनादेः पुण्यात्मकत्वेनाऽन्यस्योक्तिश्च प्रसङ्गसम्पादनार्थमेव कविभिः क्रियते न तु पुण्यदृष्ट्येत्यादि । ॥ १८ ॥ तुमुलस्तीव्रः स घोषः शब्दो नभश्च पृथिवीं च व्यनुनादयन् प्रतिशब्देन पूरयन्नेव त्वत्पुत्राणां हृदयानि व्यदारयदेव हृदयविदारणतुल्यां व्यथां कृतवानेवेति सञ्जयोऽकथयत्, अथवा धार्तराष्ट्राणां हृदयाण्येव व्यदारयत् ॥ १९ ॥

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥२०॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ! ।

अर्जुन उवाच

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ! ॥ २१ ॥

पाण्डवानां भयाभावं दर्शयन्नाह, अथ भीतेरत्यन्तरमपि कपिः शत्रुसंहारकर्त्ता हनुमान् ध्वजायां यस्य स कपिध्वजः पाण्डवोऽर्जुनो धार्तराष्ट्रान् व्यवस्थितानप्रचलितान् युद्धायावस्थितान् दृष्ट्वा शस्त्राणां सम्पाते समुदाये प्रहरणे वा प्रवृत्ते प्रयोगाभिमुखे सति पाण्डवोऽपि धनुरुद्यम्य करे धृत्वा हे महीपते ! तदा हृषीकेशमिदं वक्ष्यमाणं वाक्यमाह—तद्वाक्यमुदाहरति—हे अच्युत ! परैश्चालयितुमशक्य ! निर्विकार ! उभयोः सेनयोर्मध्ये मे रथं स्थापय ॥ २०–२१ ॥

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।

कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥

मध्येऽपि क्व स्थापनीय इत्यपेक्षायामाह, यावद् यस्मिन् देशे गत्वा स्थित्वा यावत्कालेन वा योद्धुकामानवस्थितानेतान् स्वसैन्यस्थानहं निरीक्षे तावद्देशे तावत्कालं वा रथं स्थापय, निरीक्षणप्रयोजनमाह—अस्मिन् रणसमुद्यमे युद्धोद्योगे मया कैः सह योद्धव्यं कैश्च मया सह योद्धव्यमित्यालोचनात्मकप्रयोजनमस्ति तथा मया सह स्थित्वा कैर्योद्धव्यं परैरिति च ॥ २२ ॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।

धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

किञ्च दुर्बुद्धेर्धार्त्तराष्ट्रस्य युद्धे प्रियचिकीर्षवस्तत्कर्त्तुमसमर्थाः, य एतेऽत्र समागतास्तान् परसैन्यस्थान् योत्स्यमानान् न तु शान्तिकामानहमवेक्षे पश्यामि ॥ २३ ॥

सञ्जय उवाच

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ! ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ ! पश्यैतान् समवेतान् कुरूनिति ॥२५॥

ततः किमभवदित्यपेक्षायामाह—हे भारत ! गुडाका निद्रा तदीशेन जितनिद्रेणार्जुनेनैवमुक्तो बोधितो हृषीकेशो भगवानुभयोः सेनयोर्मध्ये रथोत्तमं स्थापयित्वा भीष्मद्रोणौ प्रमुखावुत्तमौ येषां तेषां सर्वेषां महीक्षितां राज्ञां शृण्वतांताननादृत्य वक्ष्यमाणं वाक्यमुवाच चेत्यर्थः, ( षष्ठी चानादरे ) इति षष्ठी । अथवा भीष्मद्रोणयोः प्रमुखे सम्मुखे सर्वेषां महीक्षितां च सम्मुखे सेनामध्ये रथं स्थापयित्वोवाच, सार्वविभक्तिकस्तसिः, चकारेण समाससन्निविष्टोऽपि 'प्रमुखतः' इति शब्द आकृष्यते, किमुवाचेत्यत आह—हे पार्थ ! समवेतानेतान् कुरून् पश्येति ॥ २४-२५ ॥

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्य्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥

अथ शब्दस्तथार्थे, तत्रोभयोरपि सेनयोः स्थितान् पितृ ( पितृव्य ) प्रभृतीन् पार्थोऽपश्यत्, सखीन् मित्राणि, सुहृदः कृतोपकारान् ॥ २६ ॥

तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ।
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ॥२७॥

स कौन्तेयः सर्वानवस्थितान् तानुक्तान् बन्धून् तत्र समीक्ष्य

परया कृपया स्नेहजन्यकरुणयाऽऽविष्टो व्याप्तोऽत एव विषादं शोकं ग्लानिं कुर्वन्निदमब्रवीत् ॥ २७ ॥

अर्जुन उवाच

दृष्ट्वेमं स्वजनं कृष्ण ! युयुत्सुं समुपस्थितम् ।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥२८॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ॥२९॥
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ! ॥३०॥
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।
न काङ्क्षे विजयं कृष्ण ! न च राज्यं सुखानि च ॥३१॥
किं नो राज्येन गोविन्द ! किं भोगैर्जीवितेन वा ।
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥३२॥
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।
आचार्य्याः पितरः पुत्रास्तथैव च पितामहाः ॥३३॥
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ! ॥३४॥
अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ।
निहत्य धार्त्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ! ॥३५॥

तदेवेदं शब्दवाच्यं वचनमाह, हे कृष्ण ! सर्वात्मन् ! युयुत्सुं समुपस्थितं युद्धेच्छया सम्यगुपस्थितमिमं स्वजनं दृष्ट्वा

स्थितस्य मम गात्राणि सीदन्ति व्यथन्ते मुखं च परिशुष्यति । सर्वात्मत्वात्त्वयाप्यत्र युद्धे नाहं नियोक्तव्योऽस्मि ॥ २८ ॥ वेपथुः कम्पः, रोमहर्षो रोमाञ्चः, हस्तात् गाण्डीवं स्रंसते पतति । परिदह्यते, अन्तस्तापात्सर्वतस्तप्यते ॥ २९ ॥ मूर्छयाऽवस्थातुं शरीरं धारयितुं च न शक्नोमि, यतो मे मनो भ्रमतीव, निमित्तानि च विपरीतानि-अनिष्टसूचकानि शकुनान्येव पश्यामि, हे केशव ! स्वजनपालक ! मामपि पालय ॥ ३० ॥ मोहजबुद्धिं वर्णयति-आहवे-युद्धे स्वजनं हत्वा श्रेयो नानुपश्यामि, हे कृष्ण ! यतोऽहं तान् हत्वा विजयं राज्यं सुखानि च न काङ्क्षेऽतो लौकिकमपि फलं न पश्यामि ॥ ३१ ॥ हे गोविन्द ! जितेन्द्रिय ! सर्वेन्द्रियाद्यधिष्ठातः त्वद्भक्तस्य मे शरीरमात्रार्थेन राज्येन किं फलमस्ति, भोगैः सुखैः सुखसाधनैश्च किमस्ति, जीवितेन जीवितसाधनेन विजयेन वा किम्, एकाकिनो राज्यादि निष्प्रयोजनमेव, यतो येषामर्थे ( प्रयोजनाय ) नोऽस्माकं राज्यादिकमाकाङ्क्षितमस्ति, त इमे प्राणान् प्राणाशां धनानि च त्यक्त्वा युद्धेऽवस्थिताः सन्ति, के ते-इत्यत आह-आचार्य्या इत्यादि-हे मधुसूदन ! असुरविनाशक ! त्रैलोक्यराज्यस्यापि हेतोर्घ्नतोप्येतान् न हन्तुमिच्छामि महीकृते किन्तु हनिष्यामि, किञ्च हे जनार्दन ! धार्त्तराष्ट्रान्निहत्य नः का प्रीतिः स्यात्, तान्निहत्य स्थितानामस्माकं कापि प्रीतिः सुखं न स्यात् ॥ ३२–३५ ॥

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ।
तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ! ॥३६॥

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥ आततायिनमायान्तं हन्यादेवाविचारयन् ।

नाततायिबधे दोषो हन्तुर्भवति कश्चन" ॥ इत्यादि स्मृत्यनुसारेण यद्यपि तेषां वधे दोषो न भासते, तथापि ह्येतानाततायिनो बध्वा स्थितानस्मान् पापमेवाश्रयेत्, न तु पुण्यम्। एते तु "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः" ॥ इति स्मृत्यनुसारेण पुण्यभाजो भविष्यन्ति। पूर्वोक्तं त्वर्थशास्त्रं "मा हिंस्यात्सर्वा भूतानि" इति धर्मशास्त्रेण बाध्यते, तस्मात् कारणात् स्वबान्धवान् धार्तराष्ट्रान् हन्तुं वयं नार्हाः स्मः, किञ्च हे माधव ! स्वजनं हत्वा हि कथं वयं सुखिनः स्याम। एवमस्मान् हत्वा स्थितानेतानाततायिनः पापमेवाश्रयेत् तद् भवतु; एतान् हत्वाऽऽततायिनोऽस्मानिति वा ॥ ३६ ॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३७ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुम्।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ! ॥ ३८ ॥

लोभोपहतचेतसो लोभेन विनष्टबुद्धय एते कुलक्षयकृतं दोषं मित्रद्रोहे च पातकं यद्यपि नहि पश्यन्ति, तथापि हे जनार्दन ! कुलक्षयकृतं दोषं प्रपश्यद्भिरस्माभिरस्मात्पापान्निवर्त्तितुं दोषात्मकं पापं कथं न ज्ञेयमवश्यमेव ज्ञेयमस्ति। लोभिन एते मा पश्यन्तु तेन किम् "आहूतो न निवर्त्तेत द्यूतादपि रणादपि" इत्यादि स्मृतिस्तु "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुतिविरुद्धा "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिवल्लोभमूलिका तस्मादप्रमाणम्। बन्धुवधे शिष्टप्रवृत्तिरपि न प्रमाणं लोभमूलकत्वात्, "हेतुदर्शनाच्च" इति न्यायात्, तस्मात्पापान्निवर्त्तितुं ज्ञेयमेवान्यथा प्रवृत्तिपरिहाराऽसम्भवादिति ॥ ३७-३८ ॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥

कोऽसौ कुलक्षयकृतो दोष इत्याकाङ्क्षायामाह, कुलस्य क्षये सति कुलोचिताः सनातना धर्माः कर्तृणामभावात्प्रणश्यन्ति, धर्मे नष्टे सत्यवशिष्टं बालादिरूपं सर्वमपि कुलमधर्मोऽभिभवति अभिभूय व्याप्नोति ॥ अप्यर्थ उत कृत्स्नपदेन सम्बध्यते ॥३९॥

अधर्माभिभवात्कृष्ण ! प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसंकरः ॥४०॥

हे कृष्ण ! पापाद्वारक ! अधर्मेण कुलस्याभिभवात् तावत् कुलस्त्रियः प्रदुष्यन्ति, हे वार्ष्णेय ! वृष्णिकुलधर्मज्ञ ! स्त्रीषु दुष्टासु वर्णसंकरः जायते "कुविवाहैः क्रियालोपै र्वेदाऽनध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च" इति मनूक्तरीत्या कुलनाशे कुविवाहादिभिः कुलस्त्रीदोषादयो भवन्तीति भावः ॥ ४० ॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४१॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४२॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ! ।
नरकेऽनियतं वासो भवतीत्यनुशुश्रुम ॥४३॥

वर्णसंकरः कुलनाशकानां कुलस्य च नरकायैव जायते, इत्यनुषङ्गः । अथवा कुलस्य संकरः कुलघ्नानां नरकायैव भवतीत्यन्वयः । तत्पितृणामपि नरकाय भवति सः, यतो लुप्ता पिण्ड-

स्योदकस्य च क्रिया येषां ते पितरः प्रेतत्वादिनिवृत्तिकारणा भावाद्धि नरके पतन्ति। किञ्चित्कालं प्रेतभावमापन्ना दुःखिनो भवन्ति, यतः पुत्रपौत्रिणः सद्गृहस्थाः प्रारब्धान्ते देहनाशे सति पुत्रादितः पिण्डमभिवाञ्छन्ति, इति शास्त्रोद्घोषोऽस्ति, दत्तं पिण्डादिकं दृष्ट्वैव तृप्ताः सुखिनो भवन्तीति च। यतस्ते तदा देवविशेषा भवन्ति, देवविषयीा च श्रुति र्विद्यते "न वै देवा अश्नन्ति न पिबन्ति, एतदेवामृत्तं दृष्ट्वा तृप्यन्ति पिण्डादीना-मदानेऽपि वासनया कर्मानुसारेण तद्दानादिकं बुद्ध्वा प्रेत-भावान्मुक्ता भवन्त्येवेत्यन्यत्र विस्तरः। ज्ञानिनां भक्तिमतां विवेकिनां तु न प्रेतभावादिकमित्यन्यत्र ज्ञेयमत एव भगवान् विवेकादीनामुपदेशं करोति ॥ ४१ ॥ कुलघ्नानां वर्णसंकरकारकै-रेतैः पूर्वोक्तैर्दोषैः सनातना वर्णधर्माः कुलधर्माश्चोत्साद्यन्ते विनाश्यन्ते लुप्यन्ते ॥४२॥ हे जनार्दन ! उत्सन्ना विनष्टाः कुल-धर्मादयो येषां तेषां मनुष्याणां नरके नियतं ( नियमेन ) वासो भवति, अनियतं ( निरवधिकं ) वा वासो भवति, इति वयमनु-शुश्रुम शास्त्रादाचार्याच्च श्रुतवन्तो न स्वाभ्यूहेन कल्पयामः "प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टा-न्निरयान् यान्ति दारुणान्" इति ॥ ४३ ॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम्।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४४॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४५॥

राज्यप्राप्तिसुखोपभोगलोभेन युद्धायागमनमपि शोचनीय-मित्याह, अहो बतेत्यन्त खेदे, यद् यस्माद् वयं राज्यसुखलोभेन

स्वजनं हन्तुमुद्यता युद्धोद्योगेनात्रागतास्तस्मान्महत्पापं कर्तुं व्यवसिता निश्चिताः स्मः। एतस्माद्वचनाज्ज्ञायते यदेतावत्कालपर्यन्तमर्जुनस्य प्रवृत्तिर्लोभादिमूलिकैवासीन्नतु स्वधर्मादिबुद्ध्या, तज्ज्ञात्वैव भक्तायार्जुनाय स्वधर्मादिबुद्धिदानार्थं भगवता तत्सारथ्यं स्वीकृतं कृतं च, भगवदुपदेशानन्तरं तु धर्मेश्वरार्पणबुद्ध्या प्रवृत्तिरभूत् तदपि भगवता स्वीकृतैवेत्यादि ॥४४॥ अतः शस्त्रपाणयो धार्तराष्ट्रा अशस्त्रं त्यक्तशस्त्रमप्रतीकारं स्वरक्षणाय व्यापारमकुर्वाणं मां यदि रणे हन्युः, तद्धननं मम क्षेमतरं हिततरं कल्याणरूपं पूर्वकृतव्यवसायप्रायश्चित्तस्वरूपं भवेत् ॥४५॥

संजय उवाच

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत्।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥ १ ॥

सैन्यावलोकनायोत्थितोऽर्जुनः श्रीकृष्णं प्रति पूर्वोक्तप्रकारेणोक्त्वा निवेद्य शरसहितं चापं त्यक्त्वा शोकमोहादिभिः संविग्नं मानसं यस्य स संख्ये संग्रामभूमौ वर्त्तमाने रथस्योपस्थे भागविशेष उपाविशत्। अथवा संख्ये सशरं चापं विसृज्य रथस्योपरिभाग उपाविशत्॥ इतिसंजय उक्तवान्॥ ४६ ॥

दयादिना तथा दोषदर्शनेन विषण्णधीः।
विरक्तः सन् भवेज्ज्ञानयोगस्य ह्यधिकारवान्॥ १ ॥
अतश्चोक्तो विषादोऽपि योगशब्देन वै यतः।
विषण्णो गुरुमन्विष्य लभते ह्यमृतं जनः॥ २ ॥

उपनिषद् ब्रह्मविद्यैव सा भिन्नाऽध्यायभेदतः ।
ज्ञानत्वेन त्वभिन्नैव योगश्चाञ्चल्यवारणात् ॥ ३ ॥
"[1]उपनीयेममात्मानं ब्रह्मापास्तद्वयं यतः ।
निहन्त्यविद्यां तज्जं च तस्मादुपनिषद् भवेत् ॥ ४ ॥
निहत्यानर्थमूलं स्वाविद्यां प्रत्यक्तया परम् ।
गमयत्यस्तसंभेदमतो वोपनिषद्भवेत् ॥ ५ ॥
प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः ।
यतोऽवसादयेद्विद्या तस्मादुपनिषन्मता ॥ ६ ॥
यथोक्तविद्याबोधित्वाद् ग्रन्थोऽपि तदभेदतः ।
भवेदुपनिषन्नामा लाङ्गलं जीवनं यथा " ॥ ७ ॥
सत्यानन्दात्मकृष्णस्य धवलस्यार्जुनस्य च ।
सम्वादोऽपि सदानन्दहेतुः शुक्लः स्वभावतः ॥ ८ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥



---

# द्वितीयोऽध्यायः (२)

संजय उवाच

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

तमर्जुनं तथा पूर्वोक्तप्रकारेण कृपया स्नेहात्मिकया करुणयाऽऽविष्टं व्याप्तम् । अश्रुभिः पूर्णे समाकुले चेक्षणे नेत्रे यस्य

[1] बृहदारण्यकवार्तिकसंबन्धग्रन्थे ।

तम् । विषादं शोकं प्राप्नुवन्तमिदं वक्ष्यमाणं वचनं मधुसूदनः दुष्टपङ्काद् भक्तानुद्दिधीर्षु र्भगवानुवाच नतूपेक्षितवान् ॥ १ ॥

श्रीभगवानुवाच

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन ! ॥ २ ॥

तद्वचनमवतारयति श्रीभगवनिति, "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना"। इङ्गना-संज्ञा, मोक्षस्य-तत्साधनस्य ज्ञानस्य ॥ "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" ॥ नित्ययोगे मतुप् । अत एतादृङ्नित्यैश्वर्यादिमान् कृष्ण उक्तवान्, हे अर्जुन ! धनधर्माद्यर्जनशील ! "कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता । अद्रोह इति येष्वेतत्तानार्यान् संप्रचक्षते" ॥ "कर्तव्यमाचरन् काममकर्तव्यमनाचरन् ॥ तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः"॥ तद्भिन्नै रेवानार्यै र्जुष्टं सेवितं अत एवास्वर्ग्यमकीर्तिकरं स्वर्गानर्हमयशस्यं पापभीरुत्वख्यातिजनकत्वात्. इदं धर्मपराङ्मुखत्वात्मकं कश्मलं मलिनं मोहः कुतः कस्माद्धेतो र्विषमेऽसमये सभयस्थाने त्वा-त्वां वीरशिरोमणिमुपस्थितम् संप्राप्तमयुक्तमेतत्त्वेति, "अपि भ्राता सुतोऽर्घ्यो वा श्वसुरो मातुलोऽपि वा । नाऽदण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात्" ( याज्ञवल्क्य स्मृ० १३ ) । इत्यादि शास्त्रविरुद्धाचारात् ॥ २ ॥

क्लैव्यं मास्म गमः पार्थ ! नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्वल्यं त्यक्त्वोत्तिष्ठ परंतप ! ॥ ३ ॥

तस्मात्-हे पार्थ ! क्लैव्यमधैर्यं मा स्म गमः मा गाः, त्वयि वीरेऽर्जुने, एतदधैर्यं नोपपद्यते-युक्तं न भवति, तस्मात् हे परं-

तप ! शत्रुतापन ! क्षुद्रं तुच्छं हृदयदौर्बल्यं कातर्यं त्यक्त्वा युद्धायोत्तिष्ठ ॥ ३ ॥

अर्जुन उवाच

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ! ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ! ॥ ४ ॥

शत्रवस्तापनीया न तु गुरव इत्याशयेनाह, हे मधुसूदन ! दुष्टतापन ! भीष्मं द्रोणं चाहं संख्ये संग्रामे इषुभिः कथं प्रतियोत्स्यामि प्रहरिष्यामि प्रतीपो भूत्वा युद्धं कथं करिष्यामि, हे अरिसूदन ! यतो भीष्मद्रोणौ पुष्पादिभिः पूजार्हौ वर्तेते, हुंकाराद्यनर्हाभ्यां गुरुभ्यामिषुभि युद्धमधर्म एव स्यादिति भावः ॥ ४ ॥

गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीहलोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीयभोगान् रुधिरप्रदिग्धान् ॥५॥

एवं तर्हि राज्यालाभेन भोगाभावे भिक्षाटनं कर्तव्यं स्यादित्याशंकायामिष्टापत्त्या परिहरति. महाननुभावो येषां तान् महाप्रभावान् गुरूनहत्वा भैक्ष्यं भिक्षया लब्धमन्नमपीह लोके भोक्तुं श्रेयः प्रशस्यतरमस्ति हिंसानिवारणार्थत्वात् । महानुभावान् गुरून् हत्वा तु रुधिरप्रदिग्धान् गुरुहिंसया लब्धत्वादशुद्धानर्थकामान् भोगानिहैव भुञ्जीय नतु परलोके, तस्माद्युद्धं गुरुभिः सह नुचितमत्ति ॥ ५ ॥

एवं युद्धाभावस्य श्रेयस्त्वे निश्चितेऽपि शोककारणमाह—

न चैतद्विद्मःकतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताःप्रमुखे धार्तराष्ट्राः॥६॥

विवेकज्ञानरहिततया पूर्वोक्तो निश्चयः कृतः, परन्तु नोऽस्माकं कतरत् भैक्षं युद्धं वा गरीयः श्रेष्ठमेतद् विवेकेन न विद्मः यद्वा वयं जयेमैतान् यदि वा नोऽस्मानेवैते जयेयुरित्यपि न विद्मः जये सत्यपि यानेव हत्वा न जीवितुमिच्छामस्ते धार्त्तराष्ट्राधृतराष्ट्रसम्बन्धिनः प्रमुखे संमुखेऽवस्थिताः सन्ति, तस्मात् किं कर्त्तव्यतायां विमूढोऽहं शोचामि ॥ ६ ॥

संशयाज्ञानादिशोककारणं प्रदर्श्य मुमुक्षोर्गुरूपसत्तिं सूचयन् पृच्छति—

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।**
**यच्छ्रेयःस्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥**

कार्पण्यं कृपणस्याज्ञस्य क्षुद्रस्य भावोऽधैर्यं तेन दैन्यदोषेणोपहतः स्वभावो धैर्यादिकं यस्य स, धर्मे संमूढं चेतो यस्य सोऽहं त्वां भगवन्तं जगद्गुरुं सर्वज्ञं पृच्छामि, यन्निश्चितं श्रुत्यादिभिर्निर्णीतं श्रेयः स्यात्तन्मह्यं ब्रूहि, अहं ते शिष्योऽस्मि तस्मात् त्वां प्रपन्नं शरणागतं मां त्वं शाधि शिक्षय, स्वबुद्ध्या भिक्षाशनं श्रेष्ठं जानामि तत्र भिक्षाशनं युद्धं वा श्रेयः साधनमिति विवेकेन दर्शय, शोक मोहादि निवृत्तिहेतुज्ञानं चोपदिशेति ॥ ७ ॥

प्रश्ने कारणमाह—

**नहि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥८॥**

भूमावसपत्नं निष्कण्टकं सस्यादिभिः समृद्धं राज्यं सुराणामपि चाधिपत्यं वा स्वर्गेऽवाप्य स्थितस्य मे इन्द्रियाणामुच्छोषणमत्यन्तशोषकरं शोकं यत् कर्मादिकमपनुद्यादपनयेत्तान्नहि प्रपश्यामि, तथा यः कश्चित्पुरुषस्तमपनयेत्तां यद् ( यस्मात् ) नहि पश्यामि तस्मात्त्वमेवेदानीं शोकमपाकुरु ॥ ८ ॥

संजय उवाच

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ! ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

जितनिद्रः परंतपोऽप्यर्जुनो हृषीकेशं भगवन्तमेवमुक्त्वा पूर्वोक्तप्रकारेण प्रथमं कथयित्वा पुनश्च न योत्स्ये त्वत्तो निर्णयमुपदेशमश्रुत्वेति चोक्त्वा तूष्णीं बभूव ह वाग्व्यापारं त्यक्तवान्, हेति वाक्यालंकारे ॥ ९ ॥

हे भारत ! धृतराष्ट्र ! उभयोः सेनयो र्मध्ये ( शोकादीनामयोग्ये-स्थाने ) विषीदन्तं शोकादिकुर्वन्तं तमर्जुनं हृषीकेशः प्रहसन्निव शिष्यभावाद्यङ्गीकारेण प्रसन्नतां प्रकटयन्निव, इदं वक्ष्यमाणं वचनमुवाच ॥१०॥

शोकादिमयसंसारस्य कारणमहंममादिभावं तत्कारणमज्ञानं च प्रदर्श्य तन्निवारणायोपदेशः प्रारभ्यतेः—

श्रीभगवानुवाच

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥

सद्वृत्तत्वात्परमार्थरूपेण नित्यत्वाच्च अशोच्यान् भीष्मादीन् अन्वशोचः शोचितवानसि, प्रज्ञावतां वादान् वचनानि च भाषसे तदनुचितमिति, यस्मात्पण्डिता आत्मज्ञाः प्रज्ञावन्तो गताऽसून् गतप्राणान् मृतान्, अगतासूनगतप्राणाञ्जीवतश्च नानुशोचन्ति "तरति शोकमात्मवित् ।" छा० ( ७।३ ) इत्यादिश्रुतेः ।

पण्डाऽऽत्मविषया बुद्धि र्येषां ते पण्डिताः पाण्डित्यं "निर्विद्य बाल्येन तिष्ठासेत्। ३।५" इति श्रुतेः,आत्मज्ञानं लब्ध्वा बालवद्-उत्कटरागद्वेषादिरहिततया स्थिरो भवेदिति तदर्थः ॥११॥

तेषामशोच्यत्वे कारणमात्मनित्यत्वं तावदाह—

न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥

जातु कदाचिदहमीश्वरो नासमिति न किन्त्वासमेव, तथा त्वं नासीरिति न किन्त्वासीरेव, एवमिमे जनाधिपा नृपा नासन्निति न, अपि त्वासन्नेव, तथा सर्वे वयमतः परं न भविष्याम इत्यपि च न, किन्तु सर्वे वयमास्म स्मो भविष्यामश्च, अतः सर्वे वयमात्मस्वरूपेण नित्याः स्मः। औपाधिकमिथ्याभेद एवास्मासु वर्तते,परमार्थतस्तु त्रिष्वपि कालेषु जन्मविनाशादिभेदादिरहितात्मस्वरूपा एव वयं स्मः, "रामयोः कृष्णयोः र्यद्वद्योगकल्पितदेहिनाम्। स्वप्नस्थानां यथा भेदस्तथा जीवेशयोर्भिदा"। उक्तं च भागवते "स सर्व धीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः। तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः" ॥१२॥



नित्यत्वे दृष्टान्तं प्रदर्शयन्नविकारित्वमाह—

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्ति र्धीरस्तत्र न मुह्यति ॥१३॥

देहोऽस्यास्तीति देही तस्य देववदात्मनोऽस्मिन् वर्तमाने देहे यथा कौमारं बाल्यावस्था, यौवनं मध्यावस्था, जरा जीर्णावस्था, विलक्षणा भवन्ति, परन्तु तत्रात्मा न भिद्यते, यतस्ता अवस्था देह एव भवन्ति नात्मनि, तस्मादवस्था भेदेऽपि नात्मा

भ्रियते न जायते न नश्यति न परिणमते, अतोऽविक्रियस्यैवात्मनो यथा द्वितीयाद्यवस्थाप्राप्तिर्दृष्टा तथा देहादन्यो देहो देहान्तरं तस्य प्राप्तिरविक्रियस्यैवात्मनो भवतीति ज्ञात्वा धीर आत्मनित्यत्वज्ञानी तत्र न मुह्यति तद्विषयं मोहं न करोति "न जायते म्रियते वा विपश्चित्"। (कठ०॥२।१८॥) जीवापेतं वाव शरीरं म्रियते न जीवो म्रियते"। ( छा०—॥६।११।३) ॥ इत्यादि श्रुतेश्च लिङ्गदेहद्वारा देहान्तरस्य प्राप्तावपि स्वस्य जन्मादि धीरो न मन्यते श्रुतिश्चाह "महान्तं विभुमात्मानं मत्वा धीरो न शोचति"। ( कठ ६।६ ) ॥१३॥

आत्मनो नित्यत्वेऽपि प्रत्यक्षदृष्टदुःखादिवारणाय किं कर्तव्यमित्याकाङ्क्षायामाह—

**मात्रास्पर्शास्तु कौन्तेय ! शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ! ॥१४॥**

विषया आभि र्मीयन्ते ज्ञायन्ते ता मात्रा इन्द्रियाणि तासां शब्दादिभिः संयोगा मात्रास्पर्शाः, अथवा इन्द्रियै र्मीयन्त इति मात्रा विषयास्तेषामिन्द्रियैरेव स्पर्शा मात्रास्पर्शाः। यद्वा स्पृश्यन्त इति स्पर्शा विषयाः, मात्रा इन्द्रियाणि, मात्राश्च स्पर्शाश्च ते,शीतमुष्णं सुखं दुःखं च ददति तथा भूतास्ते चागमापायिनोऽतोऽनित्या अनित्यस्यैवान्तःकरणस्य विकारिणो धर्माः सन्ति, नतु नित्यस्य निर्विकारस्य धर्माः सन्ति तस्य साक्षिमात्रत्वात्, अध्यासादेवात्मनि प्रतीयन्ते, तस्मात् हे कौन्तेय ! हे भारत ! ( विशुद्धवंशद्वयप्रभव ! ) स्वात्मविवेकादिना तांस्तितिक्षस्व प्रसहस्व तेषु हर्षादिकं मा कार्षीः। यथा जलतापादिसंपर्काः स्वभावतः शीतोष्णादि प्रयच्छन्ति तथैवेष्टसंयोगवियोगा अपि सुखदुःखादि

प्रयच्छन्ति, तेषां चास्थिरत्वात्सहनमुचितं नतु तन्निमित्तहर्षशोकादि पारवश्यमिति भावः ॥१४॥

तितिक्षाफलमाह-

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ! ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

समे दुःखसुखे यस्य तं समदुःखसुखं दुःखादिषु हर्षविषादरहितं यं धीरं विवेकादिमन्त पुरुषं हि पूर्वोक्ता एते शीतोष्णादयो विषया वा न व्यथयन्ति नित्यात्मज्ञानान्न चालयन्ति नाभिभवन्ति, कस्माद् धीरं धियमीरयति प्रेरयतीति व्युत्पत्त्या चिदाभासद्वारा धीतादात्म्याध्यासेन धीप्रेरकं समदुःखसुखं सुखदुःखादिदशायां निर्विकारतया वर्तमानम् "अत्रायं पुरुषः स्वयं ज्योति र्भवति" इति श्रुतिप्रसिद्धं पुरुषं ज्ञात्वा तदात्मना वर्तमानत्वात् तं नाभिभवन्ति परमार्थतो न विकुर्वन्ति सर्वविकारसाक्षिणो विकारायोगात् तस्मात् स धीरोऽक्षुब्धो विवेकादिनिष्ठो द्वन्द्वसहिष्णुरमृतत्वाय मोक्षाय कल्पते समर्थो भवति, हे पुरुषर्षभ ! पुरुषश्रेष्ठ ! त्वां कथं व्यथयन्ति त्वमपिधीरोऽसीति भावः ॥ १५ ॥

तितिक्षादिहेतुदृढविवेकजननायाह—शोकादिकमकृत्वा शीतादिसहनस्य युक्ततां च दर्शयति—यस्मात्—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

असतः कारणभिन्नसत्तारहितस्य नामरूपात्मकस्य विकारस्य भावः स्वतः सत्ता-पारमार्थिकसत्त्वं न विद्यते कालत्रयेऽपि, वाचारम्भरण ( वागारम्भरण-वागालम्बन ) मात्रत्वात

त्रिविधपरिच्छेदयुक्तत्वेन व्यभिचारित्वाच्च रज्जुसर्पादिवत्, सदेव सोम्येदमग्र आसीदिति श्रुतिसिद्धस्य सत आत्मनः सन् घट इत्यादिबुद्ध्या सिद्धाव्यभिचारत्वस्यसर्वपरिच्छेदशून्यस्य व्यापकस्य तु कदाचिदपि नैवाभावो विद्यते । एवमनयोरुभयोः सदसतोरन्तो निर्णयो भेदः सत्सदेवासदसदेवेति निश्चयस्तत्त्वदर्शिभि र्ब्रह्मयाथात्म्यज्ञै र्दृष्टस्तस्मात्त्वमपि तेषां दृष्टिमवलम्ब्य शोकादिकं हित्वा शीतादींस्तितिक्षस्वेति भावः ॥ १६ ॥

किं तत्सदित्याकाङ्क्षायामाह—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥१७॥

असतो भिन्नमविनाशि तु न विनष्टुं शीलमस्य तत्सद्ब्रह्म, तत् सर्वपरिच्छेदशून्यं वस्तु विद्धि येनेदं सर्वं जगत् ततं व्याप्तमस्ति यतः सर्वत्र तत्सद्बुद्ध्योपलभ्यते स्फुरणरूपेण च तदेव सर्वत्र विद्यते. तद्व्यञ्जकस्य चित्तवृत्त्यादे र्विनाशसंभवेऽपि अस्याव्ययस्य निरवयवत्त्वादुपचयादिविकाररहितस्य विनाशं कर्तुं कश्चिदपि नार्हति सर्वात्मत्वात्स्वात्मनि क्रिया विरोधादसङ्गत्वाच्च "असङ्गो ह्ययं पुरुषः"। ( वृहदा० ४।३।१५ ) । "अविनशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" ( वृ० ४।५।१४ ) । इत्यादिश्रुतिश्चाह ॥ १७ ॥

किं तदसदित्याकाङ्क्षायामाह—

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत ! ॥ १८॥

अन्तो विनाशो बाधो विद्यते येषां तथाभूताः सकारणा इमे सर्वे देहाः, नित्यस्यानाशिनोऽबाध्यस्याव्ययस्य परमार्थ

नित्यस्य, रूपादिरहितत्वाद् व्याप्तिज्ञानादिनामभावादात्मनः स्वयं प्रकाशत्वाच्चाप्रमेयस्यैकस्य शरीरिणो देहिन उक्तास्तत्त्वदर्शिभिः, तस्माद्देहस्य स्वयं विनश्वरत्वादात्मनश्चाविक्रियत्वाद् युध्यस्व, हे भारत ! अत्रयुद्धादुपरतिमात्रं वारयति भगवान् नतु विदधाति, प्रथमत एव युद्धे प्रवृत्तत्वात्, नित्ये स्वतः सिद्ध आत्मनि शास्त्रमप्यतद्धर्माऽऽरोपमात्रं निराकरोति, नत्वज्ञातार्थं ज्ञापयति तस्मादप्रमेयत्वमात्मनः "यत्साक्षादपरोक्षाद् ब्रह्म" ( ३।४।१। ) "बृहदा० ३।४।१। "न तत्र सूर्यो भाति" इत्यादि श्रुतेश्च ॥ १८ ॥

अहमेषां हन्ता मयैते हन्यन्ते इति बुद्धेरज्ञानमूलकत्वं श्रुत्या दर्शयति भगवान् —

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

यः कश्चिदेनं प्रकृतं देहिनं हन्तारं हननकर्त्तारं जानाति, यश्चान्यो देहहननेनैनं हतं मन्यते हतोऽस्मीति जानाति तावुभौ देहात्मबुद्धित्वेन भ्रान्तौ देहिनं न विजानीतो न बुध्येते यतोऽयमात्मा न हन्ति न वा हन्यते, अविक्रियत्वाद्धनन— कर्तृत्वादिकमात्मनि नैव वर्त्तते, किन्तु प्रमातृदेहादौ वर्ततेऽविवेकादात्मनि भासते ॥ "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ।" (काठकश्रुतिः ) ॥ १९ ॥

कथमविक्रिय आत्मेति चेदाह-न हन्यत इत्युपपादयन्—

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२०॥

अयमात्मा कदाचिन्न जायते कदाचिन्न म्रियते, च,

यस्मादयम् न भूत्वाऽभूत्वा भूयः पुनः भविता न, तथा भूत्वा पुनः अभवितापि न तस्मान्न जायते न म्रियते च, तस्मादेवाजो नित्यश्च शाश्वतोऽपक्षयरहितो निर्गुणत्वान्निरवयवत्वाच्च, पुराणः पुरापि नव एवेति वृद्धिरहितः, शरीरे हन्यमाने परिणतेऽपि स न हन्यते, न विपरिणम्यते, इति षड्भाव विकाररहित आत्मा श्रुत्या बोधितस्तस्मादात्माऽविक्रियोऽस्ति ॥ २० ॥

अविक्रियत्वमात्मन उक्तमुपसंहरति–न हन्तीत्युपपादयन्—

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ! कं घातयति हन्ति कम् ॥ २१ ॥**

अविनाशिनमन्त्यभावविकाररहितं, नित्यं विपरिणामरहितम्, अजं जन्मरहितम्, अव्ययमपक्षयरहितमेनं पूर्वोक्तलक्षणमात्मानं यो वेद जानाति, हे पार्थ ! स पुरुषः कथं कं हन्ति घातयति वा, यथा पूर्वमात्मनि सर्वविकारा निषिद्धास्तथाऽऽत्मविदुषोपि सत्यात्मदृष्ट्या हन्तृत्वादिका कापि क्रिया नैव सम्भवति, शुद्धात्मज्ञानेनाज्ञाननिवृत्त्या रागद्वेषाद्यभावादकर्तृभोक्तृत्वाद्यनुपपत्तेरितिभावः ॥ २१ ॥

देहादिपरित्यागेऽपि नित्यात्मनोऽविक्रियत्वमेव दृष्टान्तेन पुनर्बोधयति—

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरो पराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥**

यथा लोके जीर्णानि दुर्बलतां गतानि वस्त्राणि नरः पुरुषो विहाय त्यक्त्वा अपराणि अन्यानि नवानि गृह्णाति स्वयमविक्रिय एव सन्, तथा तद्वत् देही ( अविक्रियात्मा ) जीर्णानि शरीराणि विहाय पुनरन्यानि शरीराणि संयाति ॥ २२ ॥

पुनः प्रकारान्तरेणाविक्रियत्वमाह—

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥**

एनं देहिनं शस्त्राणि न छिन्दन्ति निरवयवत्वात् असङ्गत्वात्तदात्मत्वाच्च पावको न दहति, निरवयवत्वादेवापो न क्लेदयन्ति, तथा मारुतोपि न शोषयति ॥ २३ ॥

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

फलितमाह— अच्छेद्योऽयमित्यादि, नाशादिहेतोरभावादेव नित्यो नित्यत्वाच्च सर्वगतः सर्वगतत्वाच्च स्थाणुः स्थिरस्तस्माच्चाचलस्तस्माच्च सनातनश्चिरंतनो न कुतश्चित्कारणादुत्पन्नोऽयमात्मा तथा चोत्पाद्याप्यविकार्यसंस्कार्यरूपाणां क्रियाफलानामत्र निषेधो ज्ञातव्यो भवति । वस्तुतो दुर्बोधत्वादात्मवस्तुनः प्रसङ्गमापाद्य तदेव वस्तु पुनः पुनर्वर्णयति स्म "आवृत्तिरसकृदुपदेशात" । इति न्यायेन ॥ २४ ॥

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**

किञ्चायमात्मा ऽव्यक्तः सर्वकरणाविषयत्वान्न व्यज्यते, प्रत्यक्षो न भवतीन्द्रियैरत एवायमचिन्त्योऽनुमानागोचरः। निरवयवत्वाच्चायमविकार्य उच्यते । आत्मनाशादिबुद्ध्या शोकादिकमात्मज्ञानं विनैव भवति तस्मादात्मानमेवं यथोक्तं विदित्वा नानुशोचितुमर्हसि हन्ताहमेषां मयैते हन्यन्त इति ॥२५॥

आत्मानित्यत्वाभ्युपगमवादेनाह—

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो ! नैवं शोचितुमर्हसि ॥ २६ ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

अथ चेति पक्षान्तराभ्युपगमार्थो यदि च, एनं देहिनं नित्यं सदा तत्तद्देहे जाते पुनः पुनर्जातं मन्यसे तथैव देहे मृते नित्यं मृतं वा मन्यसे हे महाबाहो ! तथापि लोकप्रसिद्ध्यनुसारेण जन्मादिवशात्मस्वीकारेऽपि, त्वमेवं शोचितुं नार्हसि ॥ २६ ॥ हि यस्माज्जातस्य लब्धजन्मनो ध्रुवोऽव्यभिचारी-अवश्यंभावी मृत्युरस्ति । मृतस्य चाज्ञस्य तत्तद्देहकृतकर्मादिभिर्ध्रुवं जन्म भवति तस्मादपरिहार्येऽवश्यंभाविन्यस्मिञ्जन्मादिलक्षणेऽर्थे त्वं शोचितुं नार्हसि ॥ २७ ॥



आत्मनो नित्यत्वेऽपि कार्यकरणात्मकभूतान्यनुशोचसि चेत्तदप्यनुचितं यतः—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ! ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

अव्यक्तमदर्शनमनुपलब्धिरज्ञानमादिर्येषां भूतानां पुत्रमित्रादिशरीराणां तानि भूतान्यव्यक्तादीनि प्रागुत्पत्तेः । उत्पन्नानि च मरणात् प्राग् व्यक्तमध्यानि व्यक्तं मध्यं येषां तथा भूतानि, पुनश्चाव्यक्तं निधनं मरणं येषां तथैव भूतानि सन्ति हे भारत ! तत्र परिदेवना शोकः प्रलापः का अनुचितेत्यर्थः । तेषां मिथ्यात्वात् ॥ तथाचोक्तं "अदर्शनादापतितः

पुनश्चादर्शनं गतः। नासौ तव न तस्य त्वं तत्र का परिदेवना" इत्यादि ॥ २८ ॥

आत्मनो दुर्विज्ञेयत्वात्किञ्च भ्रान्तेः सर्वसाधारणत्वान्न त्वां प्रत्येवोपालम्भो युक्त इत्याशयेनाह—

**आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ।२९।**

"श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः। आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः"। इति श्रुत्यनुसारेण कश्चिदेनमात्मानमद्भुतमिव पश्यति, तथैव चान्य एनमाश्चर्यवद् वदति, अन्यश्चैनमाश्चर्यवच्छृणोति, कश्चिच्चैनं श्रुत्वा विचार्य परोक्षतया ज्ञात्वोक्त्वापि नैव वेद च साक्षात्कारं नैव करोति प्रतिबन्धात्। अथवा यः कश्चिदात्मानं पश्यति स आश्चर्यतुल्योऽस्ति, तथैव यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेव भवति, कश्चिच्च श्रुत्वाप्येनं न जानाति तथाऽऽत्मनो दर्शनादिकमपि सर्वथाऽऽश्चर्यवद् भवति तस्माद् दुर्बोध एवात्मेति भावः, सच्चिदानन्दासङ्गनिर्गुणस्यात्मनोऽसदादिरूपत्वज्ञानविषयत्वादिनाऽऽश्चर्यतुल्यत्वं वर्तते। तथाऽप्रकाशस्वरूपासत्यभूतया वृत्त्या यत् स्वयंप्रकाशसत्यात्मनो दर्शनं तदाश्चर्यवत्, आत्मनो द्रष्टाऽपि निवृत्तसर्वाभिमानादिप्रपञ्च आश्चर्यतुल्य एव। एवं शब्दावाच्यमात्मानं वाक्यतात्पर्यादिभि र्ज्ञात्वा यो वदति स आश्चर्यवदस्ति तद्वदनं चाश्चर्यवद् भवति। एवमात्मनः श्रोतृश्रवणादिकमपि दुर्लभमेव ( तेन तुल्यं क्रिया चेद्वतिः ) इति वतिप्रत्ययः॥ श्रुतावाश्चर्योऽस्य वक्ता-कश्चिदेव दुर्लभोऽस्य

वक्ता, अस्य लब्धा परोक्षज्ञानी विवेकादियुक्तोऽधिकारी कश्चिन्निपुण एव, कुशलेन गुरुणानुशिष्टोऽपरोक्षज्ञानी ततोऽपि दुर्लभ इत्यर्थः ॥ २९ ॥

प्रकरणार्थमुपसंहरति—

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ! ।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ।३०॥**

हे भारत ! सर्वस्य प्राणिजातस्य देहे वर्तमानोऽयमेक एव देही-आत्माऽस्ति, स च नित्यं ( सर्वास्ववस्थासु ) अवध्योऽस्ति निरवयवत्वान्नित्यत्वाच्च, तस्माद्देहे वध्यमानेऽपि स क्वचिद्वध्यो न भवति, तस्मादात्मदृष्ट्या सर्वभूतानि त्वं न शोचितुमर्हसि । देहानामनित्यत्वात् तद्दृष्ट्याऽपि शोकोऽनर्ह एवेति किन्तु ज्ञानाद्यर्थं स्वधर्म एव कर्तव्योऽस्ति ॥ ३० ॥

परमार्थदृष्ट्या शोकादेरयुक्तत्वमुक्त्वा स्वधर्मदृष्ट्या तदाह—

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥३१॥**

स्वधर्मं क्षत्रियस्य धर्मयुद्धं धर्मशास्त्रादवेक्ष्य विचार्य ज्ञात्वाऽपि त्वं विकम्पितुं प्रचलितुं स्वधर्मान्नार्हसि, यस्मात् धर्मादनपेतो धर्म्यस्तस्मात् स्वाभाविकाद्धर्माद्युद्धादन्यत् क्षत्रियस्य श्रेयः साधनं न विद्यते अन्यस्य निषेधो युद्धप्रशंसार्थः ( अपशवो गोऽश्वेभ्यः ) इत्यादिवत् ॥ यस्माद्युद्धस्य पृथिवीजयद्वारा यज्ञाद्यर्थत्वेन प्रजापालनाद्यर्थत्वेन च श्रेयःसाधनत्वं धर्म्यत्वं च भवति तस्मात्ततश्चलनमयुक्तमिति । एतेनात्मनोऽविक्रियत्वेऽपि देहस्य क्षणभङ्गुरत्वेऽपि कस्यचिद्वधबन्धादिकमनर्थकरमेवेति शङ्कापि निरस्ता भवति ॥ ३१ ॥

युद्धस्य कर्तव्यत्वे हेतुमाह—

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ! लभन्ते युद्धमीदृशम् ॥३२॥

यदृच्छया चाप्रार्थिततयोपपन्नमागतम् अपावृतमुद्घाटितं स्वर्गद्वारमीदृशं युद्धं ये क्षत्रिया लभन्ते हे पार्थ ? त एव सुखिनो भाग्यवन्तो यस्मात्ते स्वर्गादिसुखभाजो भवन्ति ॥ ३२ ॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्त्तिं च हित्वा पापमवाप्स्यसि ॥३३॥
अकीर्त्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ॥३४॥
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥

विपक्षे दोषमाह—किंच यदि त्वमिमं धर्म्यं संग्रामं (युद्धं) न करिष्यसि, ततस्तदकरणात्स्वधर्मं कीर्त्तिं च महादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि "यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः । भर्तुर्यद् दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥ यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् । भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु" ॥ इत्यादि स्मृतेः । एतेन युद्धे पापादिशङ्का नास्ति, तवेति भावः सूचितः ॥ ३३ ॥ किञ्च तेऽव्ययाम्-दीर्घकालामकीर्त्तिं च भूतानि कथयिष्यन्ति । धर्मात्मा शूर इत्येवमादिभिर्गुणैः संभावितस्य बहुमानितस्य चाकीर्तिर्मरणाद-

रिच्यते-अधिका भवति । तस्याकीर्त्तेर्मरणं वरमित्यर्थः ॥३४॥ किञ्च येषां त्वं बहुमतो बहुभिः गुणैर्युक्त इत्येवं स्वीकृतो भूत्वा युद्धादुपरतः सन् लाघवं यास्यसि, ते महारथास्त्वां भयाद्रणादुपरतं मंस्यन्ते । न कृपया निवृत्तं चिन्तयिष्यन्ति ॥३५॥ किञ्च तवाहिता दुर्योधनादयस्तव सामर्थ्यं निन्दन्तः सन्तो बहूनवाच्यवादान् अनेकधाऽवक्तव्यान् वादान् कथयिष्यन्ति, तस्मात्ततो निन्दादुःखाद्दुखतरंनु किम्, न ततो दुःखतरमस्तीतिभावः ॥३६॥

युद्धे सर्वथा लाभ एवेत्याशयेनाह—

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय ! युद्धाय कृतनिश्चयः ॥३७॥**
**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥**



महाप्रभावैर्भीष्मादिभि धर्मयुद्धे हतो वा हतः सन स्वर्गं प्राप्स्यसि, वा कर्णादीन् जित्वा महीं भोक्ष्यसे, तस्मात्कारणात् हे कौन्तेय ! युद्धाय कृतनिश्चयः, शत्रूञ्जेष्यामि मरिष्यामि वेति निश्चयं कृत्वोत्तिष्ठ ॥ ३७ ॥ युद्धे पापवारणार्थञ्चोपदिशति, सुखदुःखे समे कृत्वा, तत्र रागद्वेषावकृत्वा, तथा तत्साधन लाभालाभौ, तत्साधनजयाजयौ च समौ कृत्वा तत्र हर्षविषादादिकमकृत्वाऽमत्वा ततो युद्धाय युज्यस्व घटस्व सन्नद्धो भव, एवं स्वधर्मबुद्धया युद्धं कुर्वन् पापं नाप्स्यसि' सकामे कर्मण्यङ्गवैगुण्यादिभिः पापं भवति निष्कामेन स्वधर्म बुद्धया कृते युद्धे पापशङ्कापि नास्ति । परमार्थप्रकरणे चायमुपदेशः प्रासङ्गिकः ॥ ३८ ॥

परमार्थदर्शनप्रकरणे स्वधर्मादिकं प्रासङ्गिकमुक्तं वस्तुतः परमार्थदर्शनमुक्तं तदुपसंहरति—

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ ! कर्मबन्धं प्रहास्यसि ॥३९॥**

एषा ते सांख्ये सम्यक् ख्यायते तत्त्वमनेन तद्विवेकज्ञानं-सद्विद्या संख्या तथाप्राप्ये परमार्थविवेकविषये बुद्धिर्ज्ञान-मभिहितोक्ता, साक्षाच्छोकमोहादिसंसारकारणदोषनिवृत्तिहेतु-भूता चैषा बुद्धिः । योगे तु निःसङ्गतया परमेश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च तत्प्राप्त्युपाये इमामनन्तरो-च्यमानां बुद्धिं शृणु, हे पार्थ ! यया योगविषयया बुद्ध्या युक्तः सन् कर्मैव बन्धस्तं प्रहास्यसि कर्मजन्याशुद्धिप्रक्षालन-परमेश्वरप्रसादादिद्वारा ज्ञानप्राप्तेः कर्मादिबन्धनाशसंभवादेषा प्ररोचनार्थास्तुतिः ॥ ३९ ॥



काम्यकर्मादितोऽस्य महद्वैलक्षण्यमित्याशयेनाह—

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥**

इह निष्कामकर्मणि समाधियोगे च मोक्षमार्गे, अभिक्रमस्य प्रारम्भस्य प्रारब्धफलस्य चित्तशुद्ध्यादे र्नाशो नास्ति कृष्यादेरिव स्वर्गादिवद्वा, चित्तशुद्ध्या विविदिषादिद्वारा ज्ञानलभ्यस्य मोक्षफलस्याविनाशित्वात्, तथा चिकित्सावत् प्रत्यवायोऽधर्मः पापोत्पत्तिरपि न विद्यते । तस्मान्निश्चितफलवत्त्वं दोषरहितत्वं चास्य विद्यते । तस्मादस्य धर्मस्य स्वल्पमप्यनुष्ठितं वैराग्य-ज्ञानादिद्वारा महतो भयात्संसारात् त्रायते रक्षति, नतु काम्य-कर्मवदङ्गवैगुण्यादिनाऽस्य नैष्फल्यं भवति ॥ ४० ॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ! ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥

इह मोक्षमार्गे या सांख्ये बुद्धिरुक्ता या च योगे वक्ष्यमाणा सा व्यवसायात्मिका निश्चयस्वभावा सांख्ययोगकर्मयोगविषया बुद्धिरेकैव भवति, प्रमाणजनितत्वाच्च सेतरविपरीतबुद्धिबाधिका भवति । अथवा हे कुरुनन्दन ! इह कर्मयोगमार्गे निश्चयात्मिका बुद्धिरेका भवति । अव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानामनिश्चितबुद्धीनां कामिनां च बुद्धयो बहुशाखा बह्व्योऽनुपरतसंसारप्रदाः शाखा यासां ताः प्रतिशाखाभेदेन ह्यनन्ताश्च भवन्ति कामनामानन्त्यात् ॥ ४१ ॥

अव्यवसायिनां व्यवसायबुद्ध्यभावे कारणमाह—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः ॥४२॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥

हे पार्थ ! कामात्मानः कामे आत्माऽन्तः करणं येषां ते कामस्वभावाः कामपराः, अतएव स्वर्गपराः स्वर्गः परः पुरुषार्थो येषां ते । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती" त्यादि वेदार्थवादपराः । स्वर्गादेरन्यन्मोक्षस्तत्साधनं वा नास्तीति वादिनो वदनशीलाः । अविपश्चितोऽल्पमेधसोऽज्ञाः, जन्मकर्मफलप्रदां जन्म च कर्म च तत्फलं प्रकर्षेण ददातीति तथा

ताम् भोगैश्वर्योर्गतिं प्राप्तिं प्रति साधनभूता ये क्रियाविशेषास्ते बहुला यस्यां वाचि तां पुष्पितां पुष्पितवृक्षवच्छोभमानां श्रवणमात्ररमणीयाम्, "अपाम सोमममृता अभूम" इत्यादिरूपां यामिमां वाचं प्रवदन्ति तया वाचाऽपहृतचेतसामपहृतमाच्छादितं चेतो विवेकप्रज्ञानं येषां भोगैश्वर्यप्रसक्तानां भोगैश्वर्ययोरेवरक्तचित्तानां तेषां समाधौ पुरुषोपभोगाय यस्मिन् सर्वं समाधीयते तस्मिन्नन्तःकरणे ब्रह्मणि ब्रह्मविषया वा व्यवसायात्मिका बुद्धिर्न विधीयते अत्र कर्मकर्तरि प्रत्ययः न, भवतीत्यर्थः अथवा फलेऽत्र सप्तमी समाध्यर्था बुद्धि र्न भवतीत्यर्थः ॥४४॥

वेदवादरतानां वेदोक्तत्रिगुणात्मकसंसार एव फलमिति दर्शयन्नुपदिशति—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ! ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥

काम्यकर्मपरा वेदास्त्रैगुण्यविषयाः, त्रयाणां गुणानां कर्म त्रैगुण्यं संसारो विषयो बोध्यो येषां तथा भूता वेदा यतः संसार एव तैः प्रकाश्यते, त्वं तु निस्त्रैगुण्यो निष्कामो भव हे अर्जुन ! तत्रोपायमाह निर्द्वन्द्वः सुखदुःखहेतुविरुद्धपदार्थासक्तिरहितो भव, तत्रापि हेतुमाह नित्यं सत्त्वे स्थितो भव, तत्रोपायमाह निर्योगक्षेमोऽनुपात्तस्योपादानं योगः, उपात्तस्य रक्षणं क्षेमस्ताभ्यां निर्गतः, रजोगुणरहितो भव, प्रारब्धाधीनं परमेश्वराधीनं च सर्वं ज्ञात्वा कामादिकं चित्तविक्षेपकारिपरिग्रहं च त्यजेति भावः। तथा आत्मवानप्रमत्तस्तमोगुणाद्विनिर्गतो भव चेति तवोपदेशः ॥ ४५ ॥

कामं विना कर्मकरणे लाघवमाह निष्काम कर्मनैरर्थक्या-शङ्कां च वारयति—

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥

यथा लोके अनेकस्मिन्नुदपाने परिच्छिन्नोदके कूपादौ स्वल्पे जलाशये यावानर्थो भवति पृथक् स्नानादिरूपः, तावानर्थः प्रयोजनं सर्वतः संप्लुतोदके पूर्णह्रदे गंगादावेकस्मिन्नेव भवति । एवं यावानर्थः सर्वेषु वेदोक्तेषु कर्मसु भवति तावानर्थो विज्ञानतः परमार्थतत्त्वज्ञस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य निष्कामस्य-निष्कामकर्मजज्ञानत एव भवति "यथा कृताय विजितायाधरेयाः संयन्त्येवमेवैनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति" "सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते" इत्यादि शास्त्रात । सर्वानन्दस्य ब्रह्मानन्देऽन्तर्भावात् ॥ अथवा सर्वतः संप्लुतोदके गङ्गादौ सति कूपादावुदपाने यावानर्थो भवति, अर्थात् तुच्छोऽर्थो भवति, नैव वाऽर्थो भवति, तथा ज्ञस्य वेदेषु तावान् तुच्छोऽर्थो भवति, नैव वार्थो भवति, निष्कामत्वान्मुक्तत्वाच्चस्यातो ज्ञानार्थकमकामः सन् कर्म कर्तव्यमेव ॥ ४६ ॥

अतएव—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतु र्भू र्मा ते सङ्गोऽस्त्वकर्मणि ॥४७॥

ते तत्त्वज्ञानार्थिनोऽशुद्धान्तःकरणस्य कर्मण्येवान्तःकरण-शोधकेऽधिकारोऽस्ति न तु ज्ञाननिष्ठायाम्. तत्रापि च कर्मकुर्वतस्ते कर्मफलेऽधिकारो मास्तु कदाचन, कस्यांचिदप्यवस्थायां कर्मफलतृष्णा ते मा भवतु । फलतृष्णया काम्ये कर्मणि

तेऽधिकारो माभूदिति भावः। एवं कर्मफलतृष्णा ते यदा स्यात्तदा त्वं कर्मफलस्य स्वर्गादे हेतुः स्याः, स कर्मफलहेतुस्त्वं मा भूः, निष्कामः सन् कर्म कुरु न सकामः। एवं निष्फलेन दुःखरूपेण कर्मणा किमिति बुद्ध्या अकर्मणि कर्माकरणे ते सङ्गः प्रीतिरासक्ति माभूत् तथा कर्मणो बन्धहेतुत्वं बुध्वाऽपि तत्त्यागं मा कुरु ॥ ४७ ॥

उक्तमेव विवृणोति—

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥

योगस्थः सन् कर्माणि कुरु, केवलमीश्वरार्थं, हे धनञ्जय! तत्रापीश्वरस्तुष्यतु, इत्यादि फलाभिलाषात्मकं कर्तृत्वाद्यभिनिवेशात्मकं च सङ्गमभिमानादिकं त्यक्त्वा कुरु, किञ्च कर्मणि क्रियमाणेऽपि चित्तशुद्धिद्वारा ज्ञानप्राप्तिरूपायां सिद्धौ तद्विपर्यय रूपायामसिद्धौ च समो हर्षविषादशून्यो भूत्वा कर्म कुरु। यत इदं कर्मफलस्य सिद्ध्यसिद्ध्योः समत्वमेव योग इति उच्यते, यत्र योगे स्थितस्य ते कर्मकर्तव्यतोक्ता ॥ फलाभिलाषं विना अत्र सर्व कर्मसु कर्तव्यता विहिता। सुखदुःखे समे कृत्वेत्यत्र तु युद्ध मात्रस्येति विशेषः ॥ ४८ ॥

कर्मयोगाद्यपेक्षया काम्यकर्मात्यन्तनिकृष्टमित्याह

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय!।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥

हे धनञ्जय! समत्वबुद्धियोगान्मोक्षफलात् कर्मणः कामिकृतं कर्म दूरेण ह्यवरम्-अतिनिकृष्टम्, जन्ममरणादिहेतुत्वात्, यत

एवमतो बुद्धौ कर्मयोगबुद्धौ तज्जन्यसांख्यबुद्धौ वा शरणमाश्रयं रक्षितारमभयप्राप्तः परंपरया साक्षाद्वा कारणमन्विच्छ प्रार्थयस्व शरणागतो भव, परमार्थज्ञानाश्रयो भवेत्यर्थः। यतोऽवरं कर्म कुर्वाणाः फलहेतवः फलतृष्णायुक्ताः सन्तः कृपणा दीना भवन्ति "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः ॥ ४९ ॥

निष्कामकर्मणः श्रैष्ठ्यं फलं चाह—

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥

इह लोके समत्वविषयया बुद्ध्या युक्तो बुद्धियुक्तो यः स सुकृतदुष्कृते पुण्यपापे उभे जहाति सत्त्वशुद्धिज्ञानप्राप्तिद्वारेणोभे परित्यजति, यतस्तस्मात्समत्वबुद्धियोगाय युज्यस्व घटस्व, स्वधर्माख्यकर्मसु यत्कौशलं बन्धनस्वभावस्य समत्वबुद्ध्या निवर्तनं तदेव योगस्तस्मात्समत्वं बुद्धियुक्तो भव त्वमिति सांख्यबुद्धियुक्तो वा पापपुण्ये उभे जहातीति तस्मात्तदर्थं घटस्व, कर्मसु ज्ञानयोग एव कौशलमिति ॥ ५० ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥

हि यस्मात्समत्वबुद्धियुक्ताः कर्मजं फलं त्यक्त्वा मनीषिणो ज्ञानिनो भूत्वा जन्मैव बन्धस्तस्माद्विनिर्मुक्ता जन्मात्मकबन्धेन रहिताः सन्तोऽनामयं सर्वोपद्रवरहितं परमं पदं स्वरूपं गच्छन्ति ॥ ५१ ॥

सांख्यबुद्धेः सत्त्वशुद्धेश्च कालमुपलक्षयति—

यदा ते मोहकलिलं बुद्धि र्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥

यदा यस्मिन् काले मोहात्मकमविवेकरूपं कलिलं कालुष्यं गहनं ते तव बुद्धि र्व्यतितरिष्यति व्यतिक्रमिष्यति, शुद्धभावमवाप्स्यते, तदा श्रोतव्यस्य श्रुतस्य च कर्मफलस्य निर्वेदं वैराग्यं गन्तासि प्राप्स्यसि वैराग्येण च फलेनान्तःकरणशुद्धिं ज्ञास्यसि तदा श्रोतव्यं श्रुतं चात्मभिन्नं निष्फलं प्रतिपद्यत इति भावः ॥५२॥

कर्मयोगफलकालमाह—

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥

बहुसाध्यसाधनविषयकश्रुतिभिः श्रवणे विप्रतिपन्ना बहुविधसंशयादिमत्त्वेन विक्षिप्ता श्रुतिविप्रतिपन्ना ते बुद्धिः समाधीयते चित्तमस्मिन्निति समाधिरात्मा तस्मिन् समाधौ परमात्मनि यदा निश्चला विक्षेपरहिता अचला संशयरहिता स्थास्यति संशयभ्रमलयविक्षेपादिकं त्यक्त्वा निश्चला भविष्यति तदा योगं ज्ञानसमाधिं साध्यसत्यसाम्यबुद्धिं प्राप्स्यतीति ॥५३॥

अर्जुन उवाच

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव !
स्थितधीःकिं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥

पूर्वोक्तात्मतत्त्वज्ञस्य लक्षणमर्जुनः पृच्छति स्म,समाधौ स्थितस्य समाधिस्थस्यात एव स्थिता प्रज्ञा ब्रह्मणि प्रतिष्ठिता बुद्धिर्यस्य

तस्य स्थितप्रज्ञस्य हे केशव ! का भाषा किं भाषणं लक्षणमस्ति, लोकैरसौ कथं भाष्यत, कै लक्षणै र्लक्षितः सन् लोकैः स्थितप्रज्ञ इत्युच्यते । व्युत्थानकाले च स्थितधीः स्थितप्रज्ञः स्तुतिनिन्दादौ स्वयं किं प्रभाषेत किमासीत कथमिन्द्रियाणां निग्रहं करोति किं व्रजेत कथं विषयान् प्राप्नोति । भाषणमासनं व्रजनं वा तस्य कथमित्यर्थः । अनेन समाधिस्थव्युत्थितचित्तावस्थाद्वयस्थस्य लक्षणं पृष्टवान् ॥ ५४ ॥

श्रीभगवानुवाच

प्रजहाति यदा कामान् सर्वान् पार्थ ! मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥

एवं पृष्टः श्रीभगवान् मुमुक्षो र्यत्नसाध्यानि जीवन्मुक्तस्वभावभूतानि लक्षणानि वदन् प्रथमप्रश्नस्योत्तरमाह, द्वाभ्याम् हे पार्थ ! यदा मनोगतान् वासनादिरूपेण मनसिप्रविष्टान् कामानिच्छादिभेदान् सर्वान् अशेषेण सविषयान् प्रजहाति प्रकर्षेण जहाति त्यजति किञ्च प्रत्यगात्मन्येव वाह्यलाभं विनैवात्मनैव तुष्टो भवति परमार्थदर्शनामृतलाभेनान्यत्राकाङ्क्षारहितः स तदा स्थितप्रज्ञ उच्यते । एतेनात्मारामस्यात्मक्रीडस्य तस्य विदुष उन्मत्तवत्कुप्रवृत्तिरपि वारिता भवति ॥ ५५ ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधी र्मुनिरुच्यते ॥५६॥

दुःखेष्वाध्यात्मिकादिषु प्राप्तेषु नोद्विग्नमक्षुभितं मनो यस्य, तथा सुखेषु प्राप्तेषु ससाधनेषु विगता निवृत्ता स्पृहा तृष्णा यस्य

अत एव वीता गता रागभयक्रोधा यस्मात्स अनुद्विग्नमना विगत स्पृहो वीतरागभयक्रोधो मुनि र्मननशीलो महात्मा स्थितधीरुच्यते ॥ ५६ ॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥

द्वितीयस्य प्रश्नस्योत्तरमाह, सर्वत्र देहजीवितादिष्वपि यो मुनिरनभिस्नेहः स्नेहरहितः सन् तत्तच्छुभमशुभं वा प्राप्य लब्ध्वा नाभिनन्दति स्तुतिवचनं नाभिभाषते हर्षं वचसा न प्रकटयति, तथाऽशुभं लब्ध्वा न द्वेष्टि सद्वेषं निन्दावाक्यं न वदति, तस्य प्रज्ञा प्रतिष्ठिता उच्यते ॥ ५७ ॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥

किमासीतेत्यस्योत्तरमाह, अयं मुनिर्ज्ञाननिष्ठायां प्रवृत्तः सन् यदा कूर्मः कमठोऽङ्गानीव यथा भयात्सोऽङ्गानि पादादीन्युपसंहरति तद्वत् सर्वशः सर्वाणीन्द्रियाणीन्द्रियार्थेभ्यः संहरते सवभ्यः शब्दादिविषयेभ्यः समाध्यवस्थायां प्रत्याहरति तदा तस्य प्रज्ञा प्रतिष्ठितोच्यते ॥ ५८ ॥

निराहारस्य रोगिणो व्रतिनो वा विषयेभ्य इन्द्रियाणि संह्रियन्ते तत्रातिव्याप्तिवारणायाह—

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥

विषया-लक्षणयेन्द्रियाणि शब्दादयो वा निराहारस्याहारनिर्मुक्तस्यानाह्रिमाणविषयस्य रोगिणः कष्टे तपसि स्थितस्य वा

मूर्खस्यापि देहिनो देहाभिमानवतो निवर्तन्ते परन्तु रसवर्जं निवर्तन्ते रसो विषयेषु रागस्तं वर्जयित्वेति। अस्य मुनेस्तु परं दृष्ट्वा परमार्थतत्त्वं ज्ञात्वा वर्तमानस्य स समूलो रागोऽपि निवर्तते। तस्माद्रसस्योच्छेदाय सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥ ५९ ॥

सम्यग्दर्शनं विना रसस्योच्छेदो न भवति तच्च दर्शनमजितेन्द्रियस्य दुर्लभमतः प्रज्ञास्थैर्यं चिकीर्षताऽऽदाविन्द्रियाणि जेतव्यानीत्याशयेन तद्विना दोषमाह—

**यततो ह्यपि कौन्तेय ! पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥**

हे कौन्तेय ! प्रज्ञास्थैर्यार्थं यततो यत्नं विषयदोषदर्शनादिकं कुर्वतोऽपि विपश्चितो मेधाविनोऽपि पुरुषस्य हि यस्मादिन्द्रियाणि प्रमाथीनि प्रमथनशीलानि तानि च विषयाभिमुखं पुरुषं विक्षोभयन्त्याकुलीकुर्वन्ति तं चाकुलीकृत्य तस्य विवेकयुक्तमपि मनः प्रसभं बलात्कारेण हरन्ति विषयाभिमुखं कुर्वन्ति। यथा कस्यचिद् धनिनो धनमेकान्ते दस्यवो हरेयुस्तथैतानि क्षणमात्रं शान्तमपि बुद्धिमतः पुरुषस्य मनो हरन्तीति भावः ॥ ६० ॥

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥**

यस्मादेवंभूतानीन्द्रियाणि, तस्मात् तानि सर्वाणि ज्ञानकर्मसाधनानि सङ्गत्यागदोषदर्शनेश्वरभक्तितः संयम्य वशीकृत्य युक्तः समाहितो मत्परोऽहं सर्वात्मा ईश्वर एव परः

सर्वोत्कृष्टः प्रियतमो यस्य स मत्परः सन्नासीत, हि यस्माद्यस्ये-न्द्रियाणि वशे भवन्ति तस्य प्रज्ञा प्रतिष्ठिता भवति ॥ ६१ ॥

युक्त आसीतेत्युक्तं तदभावे दोषमाह—

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात् क्रोधोऽभिजायते ॥६२॥
क्रोधाद् भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥६३॥

बाह्येन्द्रियाणि निगृह्यापि समाहितत्वं विना शब्दादीन् विषयान् मनसा ध्यायतश्चिन्तयतः पुंसः पुरुषस्य तेषु सङ्ग आसक्तिः प्रीतिरुपजायते, सङ्गात् प्रीतेः कामस्तृष्णाऽभिलाषः संजायते समुत्पद्यते । कुतश्चित्प्रतिहतात्कामात् क्रोधः संजायते ॥६२॥ क्रोधात् संमोहः ( कार्याकार्याविवेको ) भवति । यतो गुरूनाप्याक्रोशति । संमोहात् स्मृतिविभ्रमो गुरुशास्त्रोपदेशजनितायाः स्मृतेर्विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तावपि तस्या अनुत्पत्तिश्च भवति । ततः स्मृते र्भ्रंशात् बुद्धेः कार्याकार्यविवेकशक्तेः परोक्षात्माकारमनोवृत्तेरात्मानुभवशक्ते र्योग्यताया नाशो भवति, बुद्धिनाशात्पुरुषः प्रणश्यति, जीवन्नेव मृतः पुरुषार्थाऽयोग्यो भवति तस्माद्युक्त आसीतेति ॥६३॥

बाह्येन्द्रियसंयमेऽपि मनसः संयमाभावात्सर्वानर्थमूलं विषयाभिध्यानमुक्तमिदानीं मोक्षकारणं वदन् किं व्रजेतेत्यस्योत्तरमाह—

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यै र्विधेयात्मा प्रसादमधिगच्छति ॥६४॥

विधेयः स्वाधीन आत्मा मनो यस्य स स्वाधीनचित्तस्तु,

आत्मवश्यैरात्मनो वश्यानि स्वाधीनानि तैः, रागद्वेषाभ्यां स्वाभाविकेन्द्रियप्रवृत्तिजनकाभ्यां वियुक्तैरिन्द्रियैरवर्जनीयान् विषयान् स्वाश्रमाद्यनुसारेण चरन्नुपलभमानः प्रसादं प्रसन्नतामधिगच्छति प्राप्नोति स्वस्थो भवति। अजितमनस्कमिव जितमनस्कं विषयसङ्गो न बाधते तस्मान्मनो जेतव्यमस्ति,किञ्च जितमनस्कस्यावर्जनीयविषयोपलम्भोऽपि न दोषावह इति भावः॥६४॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते॥ ६५ ॥

प्रसादे सति अस्य विवेकिनो यतेरध्यात्मिकादीनां सर्वेषां दुःखानां हानि र्नाश उपजायते, हि यस्मात्प्रसन्नचेतसः स्वच्छान्तःकरणस्य पुरुषस्य बुद्धिराशु शीघ्रं पर्यवतिष्ठते, सुस्थिरा भवति, आकाशमिव परितः समन्तादवतिष्ठते ब्रह्मात्मरूपेण निश्चलीभवतीत्यर्थः। एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यस्माद् भवति तस्माच्चित्तप्रसादार्थो यत्नः कर्तव्य एवेति॥६५॥

योगयुक्तत्वमेव व्यतिरेकद्वारेण द्रढयन् प्रसन्नतां स्तौति—

नास्ति बुद्धिरयुक्तस्य नचायुक्तस्य भावना।
नचाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥६६॥

अयुक्तस्यासमाहितचित्तस्य बुद्धिरात्मज्ञानं श्रवणादिजन्य नास्ति न भवति, श्रवणादिकरणेऽपि ज्ञानं नोत्पद्यते,यतोऽयुक्तस्य भावना आत्मज्ञानाभिनिवेशो निदिध्यासनं च नाऽस्ति,अभावयत आत्मध्यानमकुर्वतश्च शान्तिरुपशमो ब्रह्मात्मैक्यसाक्षात्कृतिस्तृष्णाया अभावो नास्ति तस्मात् सर्व दुःखबीजस्याज्ञानतृष्णादेः सत्त्वेऽशान्तस्य कुतः सुखम् आत्मानन्दाद्यात्मकं सुखं कुतोऽपि न भवति॥ ६६ ॥

अयुक्तस्य बुद्ध्यभावे हेतुमाह—

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

हि यस्मात्स्वस्वविषयेषु चरतां प्रवर्तमानानामिन्द्रियाणां रागादियुक्तं यन्मनोऽनुविधीयतेऽनुवर्त्तते (कर्मणि[1] षष्ठी कर्मकर्त्तरि लकारः) तन्मनोऽस्य विवेकिनः पुरुषस्यात्मानात्मविवेकजां प्रज्ञां हरति नाशयति, यथाऽम्भसि जले वायुर्नावं जिगमिषतां मार्गादुद्धृत्योन्मार्गे हरति-प्रापयति तद्वदात्मविषयां प्रज्ञां हृत्वा मनोऽनात्मविषयकल्पनां करोति ॥ ६७ ॥

यततोऽपीत्युपक्रान्तमर्थमुपपाद्योपसंहरति—

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

इन्द्रियाणां मनसश्च प्रवृत्तौ यस्माद् दोषोऽस्ति तस्माद्, हे महाबाहो ! यस्य मुनेरिन्द्रियाणीन्द्रियार्थेभ्यो विषयेभ्यः समनस्कानि सर्वशः सर्वप्रकारैर्निगृहीतानि भवन्ति तस्य प्रज्ञा प्रतिष्ठिता भवति ॥ ६८ ॥

मुमुक्षुणा प्रज्ञास्थैर्याय प्रयत्नेनेन्द्रियसंयमः कर्तव्यतयोक्तः स्थितप्रज्ञस्य तु स्वत एव सिद्ध इत्याह—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

---

१ इन्द्रियाण्यनुलक्ष्य पुरुषो मनोऽनुविदधाति । अनुकरोति प्रवर्तयति पुरुषः किमनुविदधाति मनः स्वयमेवानुविधीयत इति । केचित्तु—इन्द्रियाणां मध्ये यदेकमिन्द्रियं मनोऽनुविधीयते प्रेर्यते प्रवर्तते तदिन्द्रियमस्य प्रज्ञां हरतीत्याहुः ॥

सर्वेषां भूतानामज्ञानां या परमार्थतत्त्वलक्षणाऽऽत्मनिष्ठा दृक्शक्तिर्निशेव निशा अतएव भूतानां प्रवृत्तिगोचरा न भवति। तस्यामेव प्रत्यगज्योतिषि ब्रह्मविद्यायां संयमी स्थितप्रज्ञो ज्ञानयोगी सदाऽज्ञाननिद्रायाः प्रबुद्धः सन् जागर्ति। निगृहीतेन्द्रियः सन् प्रबुध्यते। यस्यां भेदरागद्वेषादिलक्षणायामविद्यायां भूतानि जाग्रति व्यवहरन्ति प्रबुध्यन्ते, सा पश्यतो मुनेरात्मदर्शनवतो योगिनो निशेव भवति, तस्मात्स तत्र न प्रवर्तते, तस्या अविद्यारूपत्वाद्विद्यया सहावस्थानाऽसम्भवादिति भावः॥ ६९॥

उक्तसंयमिन एव मोक्षप्राप्तिः शान्तिर्न कामिन इति सदृष्टान्तमाह—

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥७०॥

अद्भिरापूर्यमाणमचला प्रतिष्ठा यस्य तमचलप्रतिष्ठमनतिक्रान्तमर्यादं समुद्रं सर्वतो गता आपो यद्वत्प्रविशन्ति, स्वात्मस्थमविक्रियमेव सन्तम्। तद्वत् सर्वे कामा इच्छाविशेषाः सविषया यमचलप्रतिष्ठमकम्प्यप्रतिष्ठं ब्रह्मनिष्ठं प्रविशन्ति स्वात्मन्येव लीयन्ते न स्वात्मवशं कुर्वन्ति, तथा अज्ञैः काम्यमानाः कामा विषया अवर्जनीया यं प्रारब्धवशात्प्रविशन्ति चित्तं तु न विकुर्वन्ति स शान्तिमोक्षमाप्नोति, कामान् विषयान् कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोति॥ ७०॥

चतुर्थप्रश्नस्योत्तरमुपसंहरति—

विहाय कामान् यः सर्वान्पुमांश्चरति निस्पृहः।
निर्ममो निरहंकारः स शान्तिमधिगच्छति॥ ७१॥

यः स्थितप्रज्ञः संयमी मुनिः पुमान् सर्वान् कामान् विहाय, शरीरजीवनमात्रेऽपि निःस्पृहो निर्ममः प्राप्ते वस्तुनि ममतारहितो निरहंकारो विद्यावत्त्वादिनिमित्तात्मसंभावनावर्जितः सन् चरति पर्यटति यथाऽधिकारं व्यवहरति स शान्तिमविद्योपरमलक्षणां निर्वाणमधिगच्छति ब्रह्मभूतो भवतीत्यर्थः ॥ ७१ ॥

ज्ञाननिष्ठां स्तुवन्नुपसंहरति—

एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

हे पार्थ ! एषा यथोक्ता ब्राह्मी ब्रह्मणिभवा स्थितिः सर्वं परित्यज्य ब्रह्मात्मनावस्थानमस्ति, एनां स्थितिं प्राप्य न विमुह्यति । पुनर्मोहं न प्राप्नोति, किञ्चास्यां स्थितावन्तकालेऽन्ते वयसि वृद्धावस्थायामपि स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वृत्तिं मोक्षमृच्छति गच्छति किमु वक्तव्यं प्रथमावस्थात एवारभ्य यो ब्राह्म्यां स्थितावतिष्ठते तस्य मुक्तावित्यपि शब्दार्थः ॥ ७२ ॥

चित्तवृत्तिनिरोधाख्यो योगो वै सांख्ययोगतः ।
जायते स च सांख्याऽऽख्यो विवेकात्मा न चापरः ॥ १ ॥
सम्यगत्रात्मनः ख्याने कामादिरहितो मुनिः ।
स्थितप्रज्ञो भवेन्नित्यं शोकादिरहितः सदा ॥ २ ॥
निवृत्तानादिमोहस्य पुनरुत्पत्त्यसम्भवात् ।
जीवन्मुक्तो विमुक्तो हि न पुनर्जायते क्वचित् ॥ ३ ॥

सांख्येन स्वात्मना युक्तो ह्यभेदेन महामुनिः ।
निर्गुणो निर्मलो ह्येको ब्रह्मात्मैवावतिष्ठते ॥ ४ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्रहिकायां
टीकायां द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः ( ३ )

पूर्वाध्याये साध्यसाधनात्मके सांख्यनिष्ठा योगनिष्ठा चेति द्वे निष्ठे प्रोक्ते, तत्र प्रजहातीत्यारभ्यैषा ब्राह्मीत्यन्तेनोत्तमा सांख्यनिष्ठा भगवतोक्ता, तया च कृतार्थता प्रोक्ता नैनां प्राप्य विमुह्यतीति, अर्जुनाय च "कर्मण्येवाधिकारस्ते", "मा ते सङ्गोऽस्त्वकर्मणि" इति कर्मैव कर्तव्यमुक्तं कर्मयोगबुद्धिमाश्रित्य, न तत एव श्रेयः प्राप्तिरुक्तवान् । तदेतच्छ्रुत्वा विचार्य च साध्यभूतसांख्यनिष्ठायामुत्कण्ठितः पर्याकुलितबुद्धिरर्जुन उवाच । यत् साक्षाच्छ्रेयः साधनं ज्ञाननिष्ठां श्रावयित्वा दृष्टानेकानर्थयुक्ते कर्मणि कथं मां भक्तं नियुञ्ज्याद् भगवान् । तस्मात्पृच्छति—

अर्जुन उवाच

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ! ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ! ॥ १ ॥

हे जनार्दन ! सर्वजनाराध्य ! चेत् यदि ते कर्मणो निष्कामकर्मयोगादपि बुद्धिर्ज्ञानमात्मज्ञाननिष्ठा ज्यायसी मता वर्तते, यावानर्थ उदपाने, इत्यनेन सर्वकर्मफलस्य तत्रान्तर्भावोक्त्यादिभिः, तत् तर्हि घोरे हिंसाप्रधाने कर्मणि मां किं नियोजयसि, हे केशव !

सर्वेश्वर ! पुनः पुनर्युध्यस्वेति वदन् मां कस्मात्कर्मण्येव प्रेरयसि, कर्मण्येवाधिकारस्ते, इति तस्यैवाधिकारं च दर्शयसीति प्रश्नः ॥ १ ॥

ननु ज्ञाननिष्ठा ज्यायसीति मद्वाक्यान्निश्चिता चेत्किमधुना पृच्छसीति भगवत आशयमालक्ष्य "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन। निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते" इति वचनमाश्रित्यार्जुन आह—

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

व्यामिश्रेणाऽविविक्तेनेव वाक्येन त्वं मे बुद्धिं मोहसीव, यद्यपि तव वाक्यं न व्यामिश्रमस्ति त्वं मां न मोहयसि तथापि मन्दबुद्धित्वान्मे तथा भातीति द्योतयितुमिव शब्दो स्तः। भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासम्भवं यदि मन्यसे तर्हि तदेकं ज्ञानं कर्म वा इदमेव तव योग्यमिति निश्चित्य वद, येन ज्ञानेन कर्मणा वाऽहं श्रेय आप्नुयाम्। येन मोक्षमहं प्राप्नुयां तदेव मे विविच्य ब्रूहि, समुच्चयासंभवादिति भावः ॥ २ ॥

श्रीभगवानुवाच

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ! ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

"इमं विवस्वते योगं प्रोक्तवानहमव्ययम्" इति वक्ष्यमाणाऽभिप्रायेण[१] पूर्वाध्याये प्रोक्तार्थाभिप्रायेण च भगवान् प्रश्नानुरूप-

१ लोके पुरा इति कथनसामर्थ्यादयमेवार्थो युक्तोऽन्यथा प्रोक्तेत्येतावतैव सिद्धेः। प्रकरणानुसारेण कथञ्चिदन्योऽप्यर्थः संभवतीत्युक्तः सोऽपि ॥

मुत्तरमाह लोकेति । हे अनघापापार्जुन ! पुरा पूर्व सर्गादौ पूर्वाध्याये वा मयाऽस्मिन् मानवे लोके द्विविधा निष्ठा स्थितिः प्रोक्ता अधिकारिभेदात् तत्र ज्ञानमेवयोगो ज्ञानयोगस्तेन सांख्यानामात्मविवेकज्ञानवतां विरक्तानां निष्ठा प्रोक्ता, कर्मैव योगः कर्मयोगस्तेन कर्मयोगिनां निष्ठा प्रोक्ता, अशुद्धान्तःकरणानां कर्मिणां कर्मैव युज्यतेऽनेति विग्रहेण योगसाधनत्वाद्योगो भवति नान्यः । ये तु व्यासवशिष्ठादयो ज्ञानवन्तोऽपि कर्मसहिता दृश्यन्ते श्रूयन्ते वा तेषामाभासमात्रं तत्कर्म भवति लोकसंग्रहार्थं, वस्तुतस्ते ज्ञाननिष्ठा एव स्वात्मदृष्ट्या भवन्ति, परदृष्ट्या कर्मवन्तो दृश्यन्ते, ततस्तेषु परदृष्ट्यैव कल्पितो ज्ञानकर्मसमुच्चयो भवति, वस्तुतः क्वापि ज्ञानकर्मसमुच्चयो न सम्भवतीति भावः ॥ ३ ॥

कर्मणो बुद्धेर्ज्यायस्त्वमर्जुनोक्तमङ्गीकृत्याङ्गाङ्गिभावेनैक्यं चाङ्गीकृत्य कर्मणो बुद्धिसाधनत्वं व्यतिरेकमुखेनाह—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

कर्मणां यज्ञादीनामिह जन्मनि जन्मान्तरे वाऽनुष्ठितानामुपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां शुद्धिकारणत्वेन च ज्ञानोत्पत्तिद्वारा ज्ञाननिष्ठाहेतूनामनारम्भादप्रारम्भादेव नैष्कर्म्यं कर्मशून्यत्वं ज्ञाननिष्ठां पुरुषो नाश्नुते न प्राप्नोति कश्चिदपि, किन्तु कदाचिदारम्भादेवाश्नुते "विविदिषन्ति यज्ञेन" इत्यादि श्रुतेः । ननु "अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्" इत्यादौ कर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयतीति चेदाह, ज्ञानरहितात्केवलात्संन्यसनादेव सिद्धिं ज्ञाननिष्ठां मुक्तिं वा नाधिगच्छति ॥ ४ ॥

तत्रैव कारणमाह—

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

हि यस्मादज्ञोऽशुद्धचित्तोऽजितेन्द्रियः कश्चिदपि जातु कदाचिदपि क्षणमपि कालमकर्मकृत्सन् न तिष्ठति, कर्ममनोरथादीन् कुर्वन्नेव तिष्ठति, यस्मादवशोऽस्वतन्त्रः सोऽज्ञः प्रकृतिजैर्गुणैरभिव्यक्तैः सत्त्वादिभिः स्वभावप्रभवैर्वा रागद्वेषादिभिः कर्म कार्यते, विज्ञस्तु स्वतन्त्रः "गुणैर्यो न विचाल्यते" इति वक्ष्यति ॥ ५ ॥

यस्त्वज्ञोऽविरक्तो विहितं कर्मादिकं न करोति स तूभयतो भ्रष्ट इत्याह—

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ! ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

यो विमूढात्मा रागाद्याक्रान्तचित्तः कर्मेन्द्रियाणि हस्तादीनि संयम्य निगृह्य, इन्द्रियार्थान् शब्दादीन् मनसा स्मरन्नास्ते तिष्ठति । नत्वात्मस्मरणं करोति, स मिथ्याचारोऽसदाचारः पापाचार उच्यते, तेन चित्तशुद्ध्यादेरभावात्पातसंभवाच्च ॥ ६ ॥ यस्तु पुनः कर्मण्यधिकृतोऽज्ञो बुद्धीन्द्रियाणि विवेकादियुक्तेन सुमनसा नियम्य कर्मेन्द्रियैः कर्मयोगमारभतेऽसक्तः सन् , हे अर्जुन ! स कर्मयोगी पूर्वस्माद्विशिष्यते श्रेष्ठो भवति ॥ ७ ॥

यस्मादेवं तस्मान्मनसा ज्ञानेन्द्रियाणि निगृह्य —

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥

नियतं स्ववर्णाश्रमोचितं नित्यं कर्म त्वं फलाभिसन्धिरहितः सन् कुरु, हि यस्मादकर्मणोऽकरणादनारम्भात् कर्मेव ज्यायः फलतोऽधिकतरमस्ति। अपि च कर्मणोऽकरणादकर्मणस्ते शरीरयात्रा शरीरस्थितिरपि प्रकर्षेण स्वधर्मवृत्त्या न सिद्ध्येदन्तःकरणशुद्धिश्च न स्यादिति ॥ ८ ॥

कर्मणा बध्यते जन्तुरिति स्मृतेः कर्मणो बन्धात्मकत्वशङ्कायामाह—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय ! मुक्तसङ्गः समाचर ॥ ९ ॥

यज्ञार्थात्-ईश्वरार्थात् "यज्ञो वै विष्णुः" इति श्रुतेः, यद्वा अवश्यकर्तव्ययज्ञदानाद्यर्थकादित्यर्थः। यद्यपि यागाद्यपि कर्मैवेति तदर्थं कर्मेत्यनुचितं भाति, तथापि यथा वनार्थो वृक्ष इति व्यवहारस्तथा यज्ञार्थं कायिकादिकर्मेति व्यवहाराद्यज्ञार्थं कर्म सम्पद्यते, अत एव सर्वान् यज्ञान् कर्मजान् वक्ष्यति, तस्माद्यज्ञार्थात्कर्मणोऽन्यत्रान्येन कर्मणाऽयं लोकः कर्मबन्धनः कर्म बन्धनं यस्य सोऽस्ति, हे कौन्तेय ! तस्मान्मुक्तसङ्गः फलासङ्गरहितः सन् तदर्थं यज्ञार्थं कर्म समाचर सम्यक् कुरु ॥ ९ ॥

इतश्चाधिकृतेन कर्म कर्तव्यं यतः—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥

प्रजापतिः प्रजानां स्रष्टा, सहयज्ञा यज्ञैरावश्यककर्मभिः सहिता प्रजाः सृष्ट्वा पुरा सर्गादावुवाचानेन यज्ञेन प्रसविष्यध्वं प्रसवं वृद्धिमुत्पत्तिं कुरुध्वम् , एष यज्ञो वो युष्माकमिष्टकामधुक् , इष्टान् कामान् फलविशेषान् दोग्धीतीष्टकामधुग् भवतु ॥ १० ॥

कथमिष्टकामदोग्धृत्वं यज्ञस्येति तदाह—

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥
इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥

अनेन यज्ञेन देवान् भावयत वर्द्धयत तर्पयत यूयम् । युष्माभिर्भावितास्ते देवा वो युष्मान् भावयन्तु वृष्ट्यादिना वर्धयन्तु एवं परस्परमन्योन्यं भावयन्तः सन्तः परं श्रेयः स्वर्गं मोक्षं वाऽभीष्टं प्राप्स्यथ ॥११॥ यज्ञैर्भाविता वर्धिताः सन्तोषिता देवा वो युष्मभ्यमिष्टान् भोगान् दास्यन्ते वितरिष्यन्ति, यस्तु तैर्देवै र्दत्तान् भोगानेभ्यो देवेभ्योऽदत्त्वाऽऽनृण्यमकृत्वा स्वयमेव भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति, स स्तेन एव ॥ १२ ॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥

ये पुनः "ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैव च । भूतयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकीर्तिताः" इत्युक्तान् यज्ञान् कृत्वा तच्छिष्टममृतमशितुं शीलं येषां ते सन्तः सर्वपापैः "कण्डणी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य वर्तन्तेऽहरहः सदा" ॥ इति स्मृत्युक्तैः सूनाकृतैरन्यैश्च मुच्यन्ते । ये त्वन्ये आत्मकारणात् स्वोदरमात्रपूरणार्थं पचन्ति ते स्वयं पापाः पापवन्तः सन्तोऽघं पापफलमेव भुञ्जते "केवलाघो भवति केवलादी" इति च वेदः ॥१३॥

जगच्चक्रप्रवृत्तिहेतुत्वादप्यधिकृतेन कर्म कर्तव्यमित्याह—

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥

अन्नाद् भुक्ताल्लोहितरेतादिक्रमेण भूतानि देहानि भवन्ति "अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते" इति श्रुतेः प्रत्यक्षाच्च । पर्जन्याद् मेघजन्यवृष्टेरन्नस्य सम्भव उत्पत्तिः,यज्ञादपूर्वात्पर्जन्यो भवति "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः । यज्ञोऽदृष्टं धर्मः कर्मणो व्यापारात्समुद्भवो यस्य स कर्मसमुद्भवः ॥१४॥ ब्रह्म वेद उद्भवः कारणं यस्य तद् ब्रह्मोद्भवं कर्म विद्धि, ब्रह्म वेदाख्यं शब्दब्रह्म अक्षरसमुद्भवमक्षरमविनाशि ब्रह्म परमात्मा समुद्भवः कारणं यस्य तदक्षरसमुद्भवं विद्धि । अस्य महतो भूतस्य निश्वसितमेतदृग्वेदः । इत्यादि श्रुतेः । यस्मादेवं भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषरहितेश्वरोद्भूतं वेदाख्यं ब्रह्म तस्मात्सर्वार्थप्रकाशकत्वात्सर्वगतमपि सद्वेदाख्यं ब्रह्म-यज्ञविधिप्रधानत्वाद्यज्ञे नित्यं सदा प्रतिष्ठितम् ॥ १५ ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ ! स जीवति ॥१६॥

एवमुक्तप्रकारेणेश्वरेणैव चक्रमिव चक्रं निरन्तरमावर्तमानं प्रवर्तितं, वेदात् कर्म, ततो धर्माख्यो यज्ञः, ततः पर्जन्यः, ततोऽन्नम्, ततो भूतानि, भूतानां पुनर्वेदात्कर्मणि प्रवृत्तिः । इत्येवं भूतानां निर्वाहकं पुरुषार्थसाधकं चक्रं य इह लोके कर्माधिकृतो नानुवर्तयति नानुतिष्ठति । हे पार्थ ! अघायुः अघं पापं आयुर्जीवनं यस्य स अघायुः, इन्द्रियाराम इन्द्रियैराराम आरमणं विषयसेवनं यस्य स इन्द्रियारामो मोघं व्यर्थं जीवति । यस्त्वेतच्चक्रमनुवर्तयति स सर्वजगद्धितं करोति तस्मात्तस्यैव जीवनं सार्थकमिति ॥ १६ ॥

"न कर्मणामनारम्भादित्या"रभ्य यदुक्तं तदनात्मज्ञार्थमेव, यस्त्विन्द्रियारामो न भवति, किन्त्वात्मारामो भवति तस्य कृतकृत्यत्वान्नैव किञ्चित्कर्तव्यं विद्यत इत्याह—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥१७॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥

यस्तु मानव आत्मज्ञाननिष्ठ आत्मन्येव रतिः प्रीतिर्यस्य स आत्मरतिर्न विषयरतिः स्यात्तथाऽऽत्मनैव तृप्तो नान्नरसादिना, किञ्चात्मन्येव सन्तुष्टः सर्वतो वीततृष्णो न बाह्येषु विषयेषु, तस्यात्मज्ञस्य कर्तव्यं कार्यं न विद्यते ॥ "ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । न चास्ति किञ्चित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ।" ( उत्तरगीता १।२२ ॥ १७ ॥ ) चतुर्थपादं विवृणोति नैवेति, तस्यात्मरतेः कृतेन कर्मणाऽभ्युदयार्थेन ज्ञानार्थेन मोक्षार्थेन वाऽर्थः स्वर्गादिप्रयोजनं नास्ति सर्वार्थस्य सिद्धत्वात् । स्वर्गस्य तुच्छत्वज्ञानाज् ज्ञानस्य जातत्वान्मोक्षस्य "नास्त्यकृतः कृतेन" इति श्रुत्या कर्मासाध्यत्वादिज्ञानाच्चेति । अकृतेन कर्माकरणेनापीह तस्य कश्चन प्रत्यवायादिर्नास्ति कोऽप्यर्थः । यस्मादस्य विदुषः सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदप्यर्थव्ययाश्रयः प्रयोजनसम्बन्धः प्रयोजननिमित्तक्रियासाध्योऽर्थार्थमाश्रयणीयः सेवनीयो नास्ति येन तदर्था क्रियाऽनुष्ठेया स्यात्, कश्चिद् भूतमाश्रित्य साध्योऽर्थो नास्ति तस्येति भावः ॥ १८ ॥

यतः सम्यग् ज्ञाननिष्ठाभावेऽशुद्धान्तःकरणस्य मुमुक्षोर्निष्काम-

कर्मण्येवाधिकारो न कर्मत्यागे त्वं च नैवंभूतो ज्ञानी किन्तु कर्माधिकृत एव—

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥१९॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥२०॥

तस्मादसक्तः फलासक्तिरहितः सन् त्वं कार्यमवश्यकर्तव्यं कर्म सततं सदा समाचर, हि यस्मादसक्तः सन् कर्माचरन् कुर्वन् पूरुषः परं ब्रह्माप्नोति मुक्तो भवति चित्तशुद्ध्यादिद्वारेणेति ॥१९॥
हि यस्माच्च जनकादयः कर्मणैव संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ताः । कर्मणैव शुद्धसत्त्वाः सन्तः संसिद्धिं सम्यग्ज्ञानं वाऽऽस्थिताः प्राप्ताः । यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्मत्वात्तद्वशात् कर्मणा सहैव संसिद्धिमास्थिताः, तर्हि तथैव त्वमपि लोकसंग्रहमेव संपश्यन् कर्म कर्तुमर्हसि, यदि तत्त्वज्ञोऽसि । लोकसंग्रहार्था प्रवृत्तिर्दयया शुद्धया भवति, न कर्तव्यबुद्ध्या शास्त्रेण, दया च प्रारब्धाधीना, तवापि प्रारब्धं तादृशमिति भावः ॥ २० ॥

मयि कर्मणि प्रवृत्ते कथं लोकसंग्रहो भविष्यतीत्याशङ्कायामाह—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥

श्रेष्ठः प्रधानभूतो राजादि र्यद्यत् कर्माचरति, तत्तदेव कर्मेतरोऽन्यो जनस्तदनुगतः स्वयमेवाचरति, तथा स श्रेष्ठो यत् लौकिकं

वैदिकं वा प्रमाणं कुरुते लोकस्तदेवानुवर्तते, प्रमाणीकरोती-त्यर्थः ॥ २१ ॥

अत्र स्वदृष्टान्तमाह—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥२२॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥२४॥

हे पार्थ ! मम त्रिष्वपि लोकेषु किञ्चन कर्तव्यं नास्ति, यतोऽनवाप्तं किञ्चित्फलमवाप्तव्यं नास्ति, तथाप्यहं लोकसंग्रहाऽर्थं कर्मणि वर्ते-एव कर्मकरोम्येवेत्यर्थः ॥२२॥ यदि ह्यहमतन्द्रितोऽनलसः सन् कर्मणि जातु कदाचिन्न वर्तेयं नानुष्ठेयं कर्मणि तदा मम श्रेष्ठस्य वर्त्म मार्गं सर्वे मनुष्याः सर्वशः सर्वप्रकारैरनुवर्तन्ते—अनुवर्तेरन् । हे पार्थ ! ॥ २३ ॥ तथा सति को दोषः स्यादिति चेदाह, चेद्यदि अहं कर्म न कुर्यां तर्हि इमे लोका उत्सीदेयुर्विनश्येयुः स्थितिहेतोः कर्मणोऽभावात् । किञ्च सङ्करस्य च कर्ता स्याम्, तेनेमाः प्रजा उपहन्यामतः कर्म करोमि प्रजानुग्रहाय प्रवृत्तस्येदमेवोचितमिति भावः ॥ २४ ॥

लोकसंग्रहार्थिना यथा कर्म कर्तव्यं तं प्रकारमाह—

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ! ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥२६॥

हे भारत ! ( ज्ञानरत ! ) अविद्वांसोऽज्ञाः कर्मणि सक्ताः कर्तृत्वाभिमानफलाभिसन्धिभ्यामासक्ताः सन्तः कर्म कुर्वन्ति यथा, तथैव लोकसंग्रहं कर्तुमिच्छुर्विद्वानसक्तः सन् कर्म कुर्यात् ॥ २५ ॥ किञ्च कर्मसङ्गिनाम् फलाशया कर्मण्यासक्तानामज्ञानां बुद्धिभेदं बुद्धेर्भेदनं चालनमकर्त्रात्मोपदेशादिना न जनयेन्नोत्पादयेत्, किन्तु विद्वान् युक्तः समाहितः सन्नविदुषां कर्म स्वयं समाचरन् सर्वकर्माणि जोषयेत्कारयेदन्यथा कर्मसु तेषां श्रद्धापगमे चित्तशुद्ध्यभावाज्ज्ञानाप्राप्त्योभयभ्रष्टोऽज्ञः स्यात् । विद्वदर्थोऽयमुपदेशः "अज्ञस्यार्द्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् । महानिरयजालेषु स तेन विनियोजितः" ॥ ( इत्युक्तं वासिष्ठे ) ॥ २६ ॥

सक्ताः कर्मणीत्येतं श्लोकं व्याचक्षाणोऽज्ञासक्तिप्रकारमाह—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥२७॥

प्रकृतेः प्रधानस्य मायाशक्तेर्विकारैः कार्यकरणरूपैर्गुणैः सर्वशः सर्वप्रकारैः कर्माणि क्रियमाणानि भवन्ति. देहादावहंकारेण विमूढ आत्माऽन्तःकरणं यस्य स विमूढात्माऽहमेव कर्मणां कर्ता, तान्यहमेव करोमीति मन्यते ॥ कर्माण्यहं कर्तेति संबन्धे तु कर्ता इति तृन्नन्तो ज्ञेयस्तत्र च कर्तृकर्मणोः कृतीत्यस्य न लोकेत्यादिना निषेधः ॥ २७ ॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥२८॥

हे महाबाहो ! गुणकर्मविभागयोर्गुणविभागस्य कर्मविभागस्य च तत्त्ववित्, नाहं कार्यकरणसंघातरूपगुणात्मा न मे कर्माणि नाहं कर्मकर्तेत्यात्मनस्तेभ्यो विभागज्ञः, गुणाः करणात्मका गुणेषु विषयेषु वर्तन्ते नात्मेति मत्वा न सज्जते कर्तृत्वाभिनिवेशं न न करोति ॥ २८ ॥

विद्वदविद्वत्कर्माणि विभज्य तयोः स्वरूपं चोपपाद्य विद्वानविदुषो बुद्धिभेदं न कुर्यादित्युक्तमुपसंहरति—

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥२९॥

प्रकृतेर्मायाशक्तेर्गुणैः कार्यकरणैः सम्यङ्मूढास्तानेवात्मत्वेन मन्वाना अज्ञा गुणकर्मसु गुणानां व्यापारेषु सज्जन्ते "वयं कर्म कुर्मः फलायेति" गुणानां व्यापारेषु स्वव्यापाराभिमानिनो भवन्ति तान् कर्मसङ्गिनोऽकृत्स्नविदोऽल्पज्ञान् मन्दान् मन्दप्रज्ञान् कृत्स्नविदात्मज्ञो न विचालयेद् बुद्धिभेदं न कुर्यादित्यर्थः, अमन्दा ज्ञानाधिकारं प्राप्तास्तु विवेकोदयेन स्वयमेव विचलन्तीति भावः । "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" (बृहदा० २।४।५) इत्यादिश्रुत्या विदुषः सर्वज्ञत्वं सिद्ध्यति ॥२९॥

कर्मण्येवाधिकारस्त इत्युक्तं द्रढयन् तदेकं वदेति पृष्टमिदानीमाह—

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥

मयि परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माण्यध्यात्मचेतसाविवेकबुद्ध्या संन्यस्य "स एव साधु कर्म कारयति" इत्यादि श्रुति-

रीत्या परमेश्वरे निक्षिप्य समर्प्य निराशीस्त्यक्ताशीः फलाभिसन्धि-रहितो निर्ममो निर्गतममत्वो विगतज्वरः विगतसन्तापो विगत-शोकः सन् त्वं युध्यस्व ॥ ३० ॥

निष्कामेन भगवदर्पणबुद्ध्या कृतकर्मणो महत्त्वमाह—

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥

येऽन्येऽपि मानवा मदुपदेशे निष्कामे कर्मणि श्रद्धावन्तोऽत-एवानुसूयन्तो दोषमपश्यन्त ईश्वरे दोषारोपमकुर्वन्तो मम इदं मतं नित्यं सततमनुतिष्ठन्त्यनुवर्तन्ते, तेऽपि शुद्धसत्त्वाः सन्तो ज्ञानं लब्ध्वा धर्माधर्माख्यैः कर्मभिर्यद्बन्धनं संसारस्तस्मान् मुच्यन्ते ॥ ३१ ॥

व्यतिरेके दोषमाह—

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥३२॥

ये तु तद्विपरीताः श्रद्धाहीना एतन्मम मतमभ्यसूयन्तो दोष-मुद्भावयन्तो निन्दन्तो नानुतिष्ठन्ति नानुवर्तन्ते तान् सर्वेषु सगुण-निर्गुणाविज्ञानेषु प्रमाणप्रमेयादिविभागे विविधमोहयुक्तान् सर्व-ज्ञानविमूढानचेतसोऽविवेकिनो दुष्टचेतसो नष्टान् पुरुषार्थभ्रष्टान् विद्धि ॥ ३२ ॥

ईश्वरस्यापि मतं कस्मान्नानुतिष्ठन्ति कथं च नश्यन्तीति चेदाह—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३॥

ज्ञानवानपि "पश्वादिभिश्चाविशेषाद्" इति न्यायात् । गुण-

दोषज्ञानवानपीति वा, स्वस्याः प्रकृतेः सदृशं चेष्टते । प्रकृतिश्च पूर्वकृतधर्माधर्मज्ञानादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः । तां प्रकृतिं सर्वभूतान्यनुयान्ति—अनुगच्छन्ति, किञ्च ज्ञानवानपि यदा तदनुकूलमेव चेष्टते तदा मूर्खस्य का कथास्ति, तस्मान्मम वान्यस्य निग्रहो बलात्प्रतिषेधः किं करिष्यति ॥ ३३ ॥

तर्हि पुरुषार्थशास्त्रयोरानर्थक्यमिति चेन्न युक्त्या निग्रहस्य सार्थक्यादित्याह—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥३४॥

इन्द्रियस्येन्द्रियस्येति वीप्सया सर्वेन्द्रियाणामर्थे स्वस्वविषये रागद्वेषौ इष्टे निषिद्धे बलवदनिष्टजनकेऽपि विवेकादि विना रागोऽनिष्टे विहिते बलवदिष्टजनकेऽपि च तथा द्वेष इति व्यवस्थितावश्यम्भाविनौ स्तः, स्वप्रकृत्यनुसारेण ग्रहणत्यागादि कुर्वाणोऽपि तयोरागद्वेषयोर्वशं न गच्छेत् पुरुषार्थस्य शास्त्रस्य चायमेव विषय उच्यते, या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति, तदा स्वधर्मपरित्यागः परधर्माधर्मानुष्ठानञ्च भवति, यदा पुना रागद्वेषौ तत्प्रतिपक्षेण विवेकज्ञानादिना नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशः, तस्मात्तयोर्वशं न गच्छेत्, यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ दस्यू इव श्रेयोमार्गस्य विघ्नकर्तारौ विरोधिनौ स्तः ॥ ३४ ॥

रागद्वेषौ त्यक्त्वा चेदीश्वरार्पणबुद्ध्या शास्त्रोक्तमेव कर्तव्यं तर्हि सुकरं किञ्चिदेव कर्तव्यं किन्न स्यादित्याशङ्कायामाह—

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥

स्वकीयो धर्मो वर्णाश्रमधर्मः स्वनुष्ठितात् साद्गुण्येनाचरितात् परधर्माद् विगुणोऽपि विगतगुणोऽप्यनुष्ठितः श्रेयान् प्रशस्यतरो यतः स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयोऽदोषत्वात्। परधर्मस्तु भयावहः "वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्मेण जीवन् हि सद्यः पतति जातितः" ( मनुः )। एवं स्वधर्म आत्मधर्मः परधर्मो रागद्वेषादिपरिपन्थिमूलक इन्द्रियधर्मः ॥ ३५ ॥

स्वधर्मस्यैव श्रेयस्त्वेऽपि कथं तं त्यक्त्वा धर्मज्ञोऽपि पुरुषः पापं करोतीति पृच्छति—

अर्जुन उवाच

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय! बलादिव नियोजितः ॥३६॥

अथ तथापि स्वधर्मस्य श्रेयस्त्वेऽपि केन हेतुभूतेन प्रयुक्तः प्रेरितोऽयं पुरुषः पापं स्वयमनिच्छन्नपि राज्ञा बलान्नियोजितो भृत्य इव पापं चरति हे वार्ष्णेय! तं ब्रूहि। केऽपि नेच्छन्ति यद्वयं स्वदुःखहेतुभूतं पापं कुर्याम दुःखिनो भूयास्म तथापि पापं कुर्वन्ति दुःखिनो भवन्तीत्यत्र को हेतुरिति भावः ॥ ३६ ॥

श्रीभगवानुवाच

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥

यस्त्वया पृष्टः प्रवर्तकः स एष प्रसिद्धः काम एवास्ति, स एष काम एव केनचिन्निमित्तेन प्रतिबद्धः क्रोधोऽपि भवति क्रोधात्मना परिणमते, अतः क्रोधोऽप्येष एव, स च कामो रजोगुणः समुद्भवः कारणं यस्य, रजोगुणस्य वा समुद्भवो यः स रजोगुणसमुद्भवः। महदशनं यस्य स महाशनोऽत एव पाप्माऽत्युग्रस्तस्मात् सामभोग-

दानादिना केनाप्युपायेन प्रशमयितुमयोग्यशत्रुरिवायं कामोऽस्ति, यतः पापत्वेन पापमनिच्छन्नपि मर्त्यो हि पापजनकं धनं द्रव्यं गृहक्षेत्रादिकं च कामयत एव, तस्मात्–तमेनं काममिह संसारे पापे कर्मणि भोगार्जनादौ–प्रवर्तकं वैरिणं विद्धि। "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ( मनुः २।९४ )। "कामक्रोधौ महाशत्रू देहिनां सहजावुभौ" ( आत्मपु० ) ॥ ३७ ॥

कामस्य शत्रुत्वप्रकारमाह—

धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥

धूमेन सहजेनाप्रकाशात्मकेन प्रकाशात्मा वह्निर्यथाऽऽव्रियते, यथा च मलेनासहजेनादर्शोऽप्याव्रियते, यथोल्वेन गर्भवेष्टनेन जरायुना गर्भ आवृत आच्छादितो भवति तथैव तेन कामेनेदं वक्ष्यमाणं ज्ञानमावृतं भवति। अत्र प्रथमदृष्टान्तेन सूक्ष्मकामेनात्मस्वरूपाच्छादनं द्वितीयेन स्थूलकामेन ज्ञानशक्त्याच्छादनं तृतीयेन स्थूलतरेण कामेन विचारविवेकाद्याच्छादनमुच्यते। धूमेनावृतश्च वह्निः प्रकाशादिस्वकार्यं करोति, मलेनावृतश्च आदर्शस्तु स्वकार्यं न करोति स्वरूपतस्तूपलभ्यते, उल्वेनावृतो गर्भस्तूपलभ्यतेऽपि न। तथा मलविक्षेपावरणात्मकेन कामेन ज्ञानस्यावृतौ ज्ञानं नोपलभ्यते इति ॥ ३८ ॥

इदं शब्दार्थं दर्शयन् तस्य शत्रुत्वं स्पष्टयति—

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय ! दुष्पूरेणानलेन च ॥३९॥

हे कौन्तेय ! अनलेन च नास्त्यलं पर्याप्तिर्यस्य सोऽनलस्तेन,

अनलतुल्येन वा तस्मादेव दुष्पूरेण दुःखेन पूरणमस्य तेन कामरूपेण ज्ञानिनो नित्यवैरिणैतेन कामेन ज्ञानमावृतं विवेकमाच्छादितं भवति । ज्ञानी हि कामोत्पत्तिकालेऽपि जानात्यनेनाहमनर्थे नियोजित इति तत आरभ्यैव दुःखी भवति, तेनासौ ज्ञानिनो नित्यवैरी न तु मूर्खस्य, स हि कामं तदुत्पत्तिकाले मित्रमिव पश्यन्नदुःखी भवति किन्तु तत्कार्ये दुःखे प्राप्ते तं शत्रु जानाति तस्मान्न तस्य नित्यवैरी भवति कामः ॥ ३९ ॥

सुखेन कामशत्रोर्नाशार्थं तदधिष्ठानं दर्शयति—

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ! ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥



इन्द्रियाणि मनोबुद्धिश्चाऽस्य कामस्याधिष्ठानमाश्रय उच्यते । एतैराश्रयैर्विवेकज्ञानमावृत्याच्छाद्यैष कामो देहिनं विमोहयति विविधं मोहयति ॥ ४० ॥ यस्मादिन्द्रियादीनां कामाश्रयत्वं तस्मादादौ कामनिरोधान्मोहाद् वा प्रथममिन्द्रियाणि नियम्य वशीकृत्य ज्ञानविज्ञानयोः शास्त्राचार्यादिलब्धात्माद्यवबोधानुभवयोर्नाशनमत एव पाप्मानं पापाचारमेनं प्रजहिहि परित्यज हे भरतर्षभ !, अत्रेन्द्रियपदेन मनोबुद्ध्योरपि ग्रहणमिन्द्रियनिरोधादेव वा तयोः सन्निरोधसंभवात् तदग्रहणमिति ॥ ४१ ॥

किमाश्रयः सन् बलिष्ठं कामं जह्यादिति चेदाह—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो ! कामरूपं दुरासदम् ॥४३॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

स्थूलं बाह्यदेहादिकमपेक्ष्येन्द्रियाणि पराणि प्रकृष्टानि श्रुतयः पण्डिताश्चाहुः, इन्द्रियाणां सूक्ष्मत्वादन्तरत्वाद् व्यापित्वाच्च । तथा इन्द्रियेभ्यो मनः संकल्पाद्यात्मकं परम् । "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" इत्यादि श्रुतौ यद्यपि अर्थेभ्यः परं मन उक्तं तथाप्यत्रेन्द्रियाण्यर्थांश्चैकीकृत्येन्द्रियेभ्यो मनः परमुक्तं सर्वेषां तेषां भौतिकत्वात्, मनसस्तु निश्चयात्मिका बुद्धिः परा यो बुद्धेः परतो महतोऽव्यक्तादपि परो भिन्न उत्तमः सूक्ष्मः स बुद्ध्यादिसर्वदृश्यद्रष्टा जीवात्मना प्रविष्टः परमात्मा यमिन्द्रियाद्याश्रयैर्युक्तः कामो मोहयतीत्युक्तम् ॥ ४२ ॥ एवं बुद्ध्यादिभ्यो विलक्षणं परमात्मानं ज्ञात्वा संस्कृतेन मनसा बुद्ध्या च मनः संयम्य दुरासदं दुर्ज्ञेयानेकविशेषं कामं जहि समूलं नाशय, आत्मज्ञानं विना सर्वात्मना कामनाशासम्भवात् पूर्वोक्तप्रकारेण परस्य परस्य ज्ञानपूर्वकमात्मानमनुभूयाज्ञाननाशेन कामं नाशयेति भावः ॥ ४३ ॥

निष्कामेन कृतं कर्म हीश्वरार्पणबुद्धितः ।
संशोध्यान्तर्भवं स्वान्तं ज्ञानयोग्यं करोति यत् ॥ १ ॥
तस्मात्कर्मापि योगस्तद्भेदचाञ्चल्यवारणात् ।
वरणीयं मुमुक्षुभिर्लोकसंग्रहिभिस्तथा ॥ २ ॥

उपायः कर्मनिष्ठातः प्राधान्येनात्र वर्णिता ।
उपेया ज्ञाननिष्ठा तु तद्गुणत्वेन कीर्त्तिता ॥ ३ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां तृतीयोऽध्यायः ॥ ३ ॥

---

# चतुर्थोऽध्यायः ( ४ )

एवमध्यायद्वयेन कर्मयोगसहितो ज्ञाननिष्ठालक्षणो योग उक्तः । यस्मिन् प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च वेदार्थः समाप्तः । अयमेव चार्थोऽत्र भगवता विवक्षितोऽतश्च परिसमाप्तं वेदार्थं मन्यमानस्तं वंशकथनेन स्तौति—



इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ! ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

इमं तव कर्तव्यत्वेनोपदिष्टं कर्मयोगम्, यद्वाऽध्यायद्वयेनोक्तं कर्मयोगसाधनकं ज्ञानयोगमव्ययमव्ययफलकत्वादस्य हि सम्यग् दर्शनस्य मोक्षाख्यं फलं न व्येति, तस्मादव्यभिचारिफलमिमं योगमहं विवस्वते सूर्याय सर्गादौ प्रोक्तवान् बलाधानाय, स च मनवे

प्राह, मनुश्चेक्ष्वाकवेऽब्रवीत् ॥ १ ॥ एवं परंपरया प्राप्तमिमं योगं राजर्षयो राजानश्च त ऋषयो विदुः प्रभुत्वे सति सूक्ष्मार्थदर्शनसमर्थत्वात् । हे परन्तप ! स योग इह लोके महता कालेन नष्टो विच्छिन्नसम्प्रदायोऽभूत् ॥ २ ॥ स एव पुरातनो मानवे प्रोक्तोऽयं योगस्तेऽद्य मया प्रोक्तोऽध्यायद्वयेन, यतस्त्वं मे भक्तोऽसि सखा च, यस्माच्चैतदुत्तमं रहस्यमस्ति गुह्यमतिगोप्यं योगात्मकं ज्ञानमिति ॥ ३ ॥

स्वसदृशदेहित्वदृष्ट्या जातायाः शङ्काया अपाकरणाय पृच्छति—

अर्जुन उवाच

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

भवतो जन्मापरमर्वाचीनं विवस्वतो जन्म परं पूर्वं सर्गादावभूत् । तस्मादहं कथं विजानीयामेतदविरुद्धार्थतया, यस्त्वमिदानीं मह्यं योगं प्रोक्तवान् स त्वमादौ विवस्वत इमं योगं प्रोक्तवानिति ॥ ४ ॥

उक्तां शङ्कां परिहरन्—

श्रीभगवानुवाच

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ! ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ! ॥ ५ ॥

हे अर्जुन ! मे मम तव च बहूनि जन्मानि व्यतीतानि, तानि सर्वाण्यहमप्रतिहतज्ञानशक्तित्वात्सर्वज्ञत्वाद्वेद जानामि, हे परन्तप ! त्वं तु धर्माधर्मादिभिः प्रतिबद्धज्ञानशक्तित्वान्न वेत्थ, न जानीषे ॥ ५ ॥

नित्यशुद्धसर्वज्ञेश्वरस्य धर्माधर्माभावात्कथं तव जन्मेति चेदाह—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

अजो वस्तुतो जन्मरहितो भौतिकधर्माद्यधीनदेहाभाववानपि सन् अव्ययात्माऽक्षीणज्ञानशक्तिस्वभावोऽपि सन् तथा भूतानामीश्वरोऽपि सन् स्वां प्रकृतिं त्रिगुणात्मिकामधिष्ठाय वशीकृत्य तया आत्मनो माययैव सम्भवामि, जात इव देहवानिव भवामि न तु लोकवत् परमार्थतो भवामीति ॥ ६ ॥

तच्च मायामयं जन्म कदा किमर्थं च भवतीति चेच्छृणु—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

हे भारत ! यदा यदा हि धर्मस्य ग्लानिर्हानिर्ह्रासो भवति तथाऽधर्मस्याभ्युत्थानं वृद्धिरुद्भवो भवति तदाऽहमात्मानं सृजामि जन्मवन्तमिव दर्शयामि माययेति, यद्यपि जीवानामपि माययैव जन्म भवति तथापि तेषां स्वकीयधर्माधर्मनिमित्तकं भूतद्वारा लौकिकवास्तविकतायुक्तं भवति, नेश्वरस्य तथा भवति, मायया सङ्कल्पमात्रेण साक्षाज्जन्यत्वाद्देहस्येति भावः । "माया ह्येषा मया सृष्टे"त्युक्तं महाभारते ॥ ७ ॥ साधूनां सन्मार्गस्थानां भक्तानां परित्राणाय दुष्कृतां पापकारिणां विनाशाय किञ्च धर्मसंस्थापनार्थाय युगे युगे मायया सम्भवामि ॥ ८ ॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ! ॥ ९ ॥

हे अर्जुन ! यः कश्चिन्मे मम जन्म मायामयं कर्म च साधुरक्षणादिकं दिव्यमलौकिकमेवं यथोक्तं तत्त्वतो यथावद् वेत्ति स देहं त्यक्त्वा देहाभिमानादिकं त्यक्त्वा स्वस्यापि जन्मादिकमीश्वरीयमायामयं ज्ञात्वा शुद्धनित्यमुक्तात्मज्ञो भूत्वा पुनर्जन्म नैति न प्राप्नोति किन्तु मां परमात्मानमेति मुच्यते ॥ ९ ॥

अस्य मोक्षमार्गस्याधुनिकत्वं वारयति—

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥

वीता विवेकादिना विगता रागादयो येभ्यस्ते वीतरागभयक्रोधा मन्मया ब्रह्मविद ईश्वराभेददर्शिनो, मामीश्वरमेवोपाश्रिता ईश्वरज्ञानध्यानमात्रनिष्ठाः, ज्ञानमेव तपस्तेन ज्ञानतपसा पूताः परां शुद्धिं गताः, बहवो मद्भावं मोक्षमागताः समनुप्राप्ताः ॥ १० ॥

एवं स्वस्मिन् प्रसक्तौ रागद्वेषौ वारयन् फलभेदे कारणमाह—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ ! सर्वशः ॥११॥

ये आर्त्तादयो भक्ता येन प्रकारेण यत्फलार्थितया मामीश्वरं प्रपद्यन्ते भजन्ति, तांस्तथैव तत्तत् फलदानेनैवाहं भजाम्यनुगृह्णामि, न तु रागद्वेषादिना किञ्चिदपि करोमि । ये मनुष्या यस्मिन् कर्मण्यधिकृता इन्द्रादिदेवं यजन्ते सर्वशः सर्वप्रकारेण प्रवृत्तास्ते ममैव कर्माऽऽत्मकं वर्त्म मार्गमनुवर्तन्ते, इन्द्रादिरूपेणापि ममैव सेव्यत्वात् । "इन्द्रं मित्रं वरुणमग्निमाहु"रित्यादि मन्त्रवर्णात् तस्मा-

देवभक्तेभ्योऽप्यहमेव तत्तद्रूपेण तत्तत्कर्मानुसारेण च फलदाताऽस्मि तस्मादेव च मे कचिदपि वैषम्यं नास्ति "फलमत उपपत्तेः" इति न्यायात् ॥ ११ ॥

एवं सति सर्वज्ञं सर्वशक्तिमन्तं त्वामेव मोक्षेच्छया सर्वे किमिति न भजन्ति कस्माद्देवान् यजन्त इति चेदाह—

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥

कर्मणां सिद्धिं फलनिष्पत्तिं काङ्क्षन्तः प्रार्थयन्त इहास्मिँल्लोके देवता यजन्ते, हि यस्मादस्मिन् मानुषे लोके कर्मजा सिद्धिः फलप्राप्तिः क्षिप्रं शीघ्रं भवति लोकान्तरेऽपि भवति कर्मजा सिद्धिः किन्तु सा चिरेण भवति, ऐहलौकिकफलस्य क्षिप्रलाभाय मनुष्या देवता यजन्ते, न मुमुक्षवो भवन्ति न वा सर्वात्मानं मामीश्वरं भजन्ते, ईश्वरभजननिष्कामकर्मजसिद्धेश्चित्तशुद्ध्यादेश्चिरकालसाध्यत्वादिति ॥ १२ ॥

कस्मात्कारणात् तव वर्त्मानुवर्तन्त इत्याकाङ्क्षायां स्वकीयं दिव्यं कर्माह—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३॥

गुणविभागशः कर्मविभागशश्च गुणानां कर्मणां च विभागैः, चत्वारो वर्णा एव चातुर्वर्ण्यं मयेश्वरेण सृष्टं, सत्त्वप्रधानस्य ब्राह्मणस्य शमादीनि कर्माणि, सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यादीनि, तम उपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि रज उपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषादीनि चेत्येवमीश्वरेणैव सृष्टं-

रचितम्। यद्यपि मायया तस्य कर्ताऽहमस्मि तथापि मामव्ययमकर्तारं विद्धि। तस्माच्च मयि वैषम्यादिकं नास्ति॥ १३॥

अकर्तृत्वमेव दर्शयति—

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते॥१४॥

मां तानि कर्माणि न लिम्पन्ति देहाद्यारम्भकत्वे न निबध्नन्ति, अहङ्काराद्यभावात्। तेषां कर्मणां फलेषु मे स्पृहा तृष्णा आसक्तिर्न भवति तस्मादपि मां कर्माणि न लिम्पन्ति। अन्योऽपि यः कश्चिन्मामिति उक्तप्रकारेणात्मत्वेन च जानाति सोऽपि कर्मभिर्न बध्यते, परमात्माभिन्ने स्वात्मनि लेपाद्यभावात् सर्वानर्थकारणभूतस्य अविद्यादेर्निवृत्तेश्चेति भावः॥ १४॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्॥१५॥

नाहं कर्ता न मे कर्मफले स्पृहेति, एवं ज्ञानाद्यतः कर्मभिर्न बध्यते तस्मादेवं ज्ञात्वा पूर्वैरतीतैरतिक्रान्तैरपि मुमुक्षुभिः कर्म कृतं ज्ञानार्थं मोक्षार्थञ्च तस्मात्त्वमपि तत्कर्म ज्ञानाद्यर्थं लोकसंग्रहार्थं वा कुरु यत्कर्म पूर्वैर्जनकादिभिरपि पूर्वतरं कृतम्। न तूष्णीमासनं संन्यासं वा कुरु त्वमिति भावः। प्रासङ्गिकमुक्त्वाऽनेन पुनरपि कर्मयोगकर्तव्यतोक्ता॥ १५॥

उक्तकर्मयोगस्य कर्माकर्मादिस्वरूपस्य च दुर्ज्ञेयत्वमाह—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्॥१६॥

किं कर्म किञ्चाकर्मात्रास्मिन् विषये कवयो मेधाविनोऽपि

मोहिता मोहं संशयं गताः प्राप्ताः । तत्कर्म, अकारप्रश्लेषादकर्म च ते तुभ्यमहं वक्ष्यामि, यत् कर्मादि ज्ञात्वाऽशुभात्संसारान्मोक्ष्यसे ॥ १६ ॥

ननु देहादिव्यापारः कर्म तूष्णीमासनमकर्मेति लोकप्रसिद्धमस्ति तत्र किं वक्तव्यं विद्यत इति चेदाह—

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥**

कर्मणो विहितव्यापारस्य तत्त्वं बोद्धव्यमस्ति, तथा विकर्मणो निषिद्धस्याकर्मणस्तूष्णींभावस्य च तत्त्वं बोद्धव्यमस्ति हि यस्मात्कर्मादीनां गतिस्तत्त्वं गहना विषमा दुर्ज्ञानाऽस्ति । अस्तितत्त्वशब्दयोरध्याहारः, कर्मण इत्युपलक्षणार्थश्चात्र ॥ १७ ॥

किं पुनः कर्मादेर्बोद्धव्यं तत्त्वमिति तदाह—

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥**

क्रियते इति कर्म व्यापारमात्रं तस्मिन्नकर्म यः पश्येत् । अकर्मणि च कर्म यः पश्येत् । अयं भावः, यथा नौस्थस्य तीरतरुषु कर्मरहितेषु कर्म भाति, तद्वद्देहाद्याश्रयं कर्माऽविद्ययाऽऽत्मनि भाति तत्र विवेकदृष्ट्या योऽकर्म पश्येत्, नाहं कर्ता न ममास्य फलमपेक्षितमित्यादि । तथा गच्छत्स्वपि सूर्यादिषु नैते गच्छन्तीति प्रत्ययादिवन्नित्यं क्रियायुक्तेषु देहेन्द्रियादिषु देहाभिमानिनोऽपि नाहं किञ्चित्करोमि तूष्णीं सुखमासे चेत्यादि भ्रान्त्या देहादौ प्रतीयमानेऽकर्मणि च कर्म यः पश्येन्निवृत्तेरपि क्रियात्वात्कर्तृतन्त्रत्वाच्च, स मनुष्येषु बुद्धिमान्, कृत्स्नकर्मकृच्च स योगयुक्त इति

कर्माकर्मतत्त्वदर्शी स्तूयते । यद्वाऽहंकारफलाशादि विना लोकसंग्रहादिकर्तव्यबुद्ध्या क्रियमाणे कर्मणि कर्माभावं, साहंकार विहितकर्मत्यागे कर्म च यः पश्येत्। स स्वफलदर्शनानुसारेण निष्कामोऽपि युक्तः समाहितः सन् स्वोचितकृत्स्नकर्मकर्ता भवति, तस्मात्स एव मनुष्येषु बुद्धिमान् ज्ञानी तत्त्वज्ञोऽपि भवतीति ॥१८॥

पूर्वोक्तमेव विशदयति—स्तौति च—

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥

यस्य यथोक्तदर्शिनः सर्वे समारम्भाः समारभ्यन्त इति समारम्भाः सत्कर्माणि कामतद्धेतुसंकल्पवर्जिता भवन्ति कर्मफलेच्छादिविनैव कर्माणि क्रियन्ते, मुधैव चेष्टामात्रा अनुष्ठीयन्ते । तं ज्ञानाग्निना दग्धं कर्म यस्येति ज्ञानाग्निदग्धकर्माणमात्मज्ञं बुधाः पण्डिताः पण्डितमाहुः। कर्मादावकर्मादिदर्शनमत्र ज्ञानं तेन सर्वकर्मनाशकज्ञानाद्विविक्तात्मज्ञानमेतद् गम्यत इतिभावः ॥ १९ ॥

ज्ञानाग्निदग्धकर्मत्वात्तस्य ज्ञानोत्तरं क्रियमाणं कर्माऽकर्मैव भवतीत्येतदाह—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥२०॥

कर्मणि तत्फले चासङ्गं कर्तृत्वाभिमानं फलेच्छां च त्यक्त्वा फलेच्छाऽभावाच्च निराकाङ्क्षो ज्ञानेन नित्यतृप्तो देहाद्यभिमानाभावादेव निराश्रयो दृष्टादृष्टेष्टफलसाधनाश्रयरहितो ज्ञानी प्रारब्धानुसारेण कर्मण्यभिप्रवृत्तोऽपि लोकदृष्ट्या, स्वदृष्ट्या स न किञ्चित्करोति निष्क्रियनिजात्मदर्शनसम्पन्नत्वात्कामाद्यभावाच्चेति ॥ २० ॥

गृहस्थानां प्रवृत्तकर्मणां ज्ञाने जातेऽपि कर्मकर्तव्यतामभिधाय विरक्तानामप्रवृत्तकर्मणां विहितकर्माकरणाजन्यदेहस्थित्यर्थं कर्मजन्यदोषाभावमाह—

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥

निराशीर्वितृष्णः, यतौ निगृहीतौ चित्तात्मानौ अन्तःकरणबाह्यकार्यकरणसंघातौ येन स यतचित्तात्मा त्यक्ताः सर्वे परिग्रहा भोगोपकरणानि येन स त्यक्तसर्वपरिग्रहो ज्ञानी केवलं शारीरं शरीरस्थितिमात्रप्रयोजनं कर्म निरभिमानं कुर्वन् किल्विषं धर्माऽधर्मं न प्राप्नोति, कर्मत्यागजन्यमवर्जनीयहिंसादिजन्यं वा पापं न प्राप्नोति मुक्तो भवति। धर्मस्यापि संसाररूपत्वात्तत्तरति सः ॥ २१ ॥

विरक्तस्य साधकस्य मुमुक्षोः साधनं सिद्धस्य धारणां तत्फलञ्चाह—

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥२२॥

अप्रार्थितोऽप्रयत्नतो[1] लाभो यदृच्छालाभस्तेन सन्तुष्टः हर्षशोकादिद्वन्द्वानि अतीतोऽतिक्रान्तो द्वन्द्वातीतो द्वन्द्वैः शीतोष्णादिभिराक्रान्तोप्यखिन्नचित्तः, परोत्कर्षासहनरूपमत्सरशून्यो विमत्सरो निर्वैरः यदृच्छालाभस्य कस्यचित्कर्मणो वा सिद्धावसिद्धौ समो निर्विकारो यः सम्यग्दर्शी स स्वोचितं कर्म कृत्वापि न निबध्यते, ज्ञानाग्निना सहेतुकस्य कर्मणो दग्धत्वात् ॥ २२ ॥

१ अल्पार्थेऽत्र नञ् द्रष्टव्यः ।

कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोतीत्युक्तं तदेव विवृणोति—

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

सर्वासक्तिरहितस्यात एव धर्माधर्मादिफलरूपबन्धान्मुक्तस्य फलाशादिरहितस्य ज्ञान एवावस्थितं चेता यस्य ज्ञानावस्थितचेतसः, यज्ञाय यज्ञनिर्वृत्यर्थं कर्माचरतः पुरुषस्य समग्रमग्रेण फलेन सहितं कर्म प्रविलीयते नश्यति ॥ २३ ॥

कोऽसौ यज्ञो यदर्थं कर्माचरतोऽवश्यं भोक्तव्यमपि कर्म प्रविलीयते कस्माच्च तत्प्रविलीयत इत्याकाङ्क्षायामाह—

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

अर्प्यतेऽनेन तदर्पणं करणं ब्रह्मैव, एवमधिकरणसम्प्रदानादिकमपि कारकं ब्रह्मैव ब्रह्मविद्दृष्ट्या भवति, बाधायां च समानाधिकरणं यथा यद्रजतं तच्छुक्तिकैव । हविर्घृतादिकं ब्रह्मैव, ब्रह्माग्नाविति समस्तं पदम्, यत्र हूयते सोऽग्निरपि ब्रह्मैव, ब्रह्मणैव कर्त्रा हूयते च तेन यद्धुतं हवनक्रिया तदपि ब्रह्मैव, ब्रह्मैव कर्म तत्र समाधिर्यस्य स ब्रह्मकर्मसमाधिस्तेन गन्तव्यं यत् फलं तदपि ब्रह्मैव, एवं विदुषा कृतं कर्म परमार्थतोऽकर्म सम्पद्यते, ब्रह्मत्वं च तस्य सम्पद्यतेऽतो निवृत्तकर्मणोऽपि सयज्ञत्वं सम्पद्यते, ज्ञानस्य यज्ञत्वं च स्तुत्यर्थं सम्पाद्यते, यदर्पणादि यज्ञे प्रसिद्धं तदस्य विदुषोऽध्यात्मं ब्रह्मैवान्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनां विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यादिति ॥ २४ ॥

ज्ञानयज्ञस्य स्तुत्यर्थमन्ये यज्ञा उच्यन्ते—

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

देवा इन्द्रादयो येनेज्यन्ते तं दैवं यज्ञमेवापरे कर्मयोगिनः पर्युपासते कुर्वन्ति । अपरे ज्ञानयोगिनस्तु ब्रह्मैवाग्निर्ब्रह्माग्निस्तस्मिन् सत्यज्ञानादिलक्षणे यज्ञं जीवात्मानमात्मनामसु यज्ञशब्दस्य पाठात्, यज्ञेन सत्यादिलक्षणेनात्मनैवोपजुह्वति, सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मरूपेणैव यदवलोकनं स तस्मिन् होमस्तं ब्रह्मविदः कुर्वन्ति । जीवब्रह्माभेददर्शनं यज्ञत्वेन सम्पाद्य, तत्साधनयज्ञमध्ये "श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञ" इति स्तुत्यर्थं पठ्यते ॥ २५ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

अन्ये योगिनः प्रत्याहारपराः श्रोत्रादीनि ज्ञानेन्द्रियाणि संयमा धारणाध्यानसमाधिस्वरूपा इन्द्रियवृत्तिसंयमा एवाग्नयः संयमाग्नयस्तेषु जुह्वति, इन्द्रियसंयममेव कुर्वन्ति । संयमः प्रतीन्द्रियं भिद्यते तेन बहुवचनम् । अन्ये विवेकिनः प्रारब्धवशादुपलब्धान् शब्दादीनविरुद्धान् विषयानिन्द्रियाग्निषु जुह्वति, अविरुद्धविषयग्रहणं होमं मन्यन्ते ॥ २६ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्मणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

अपरे योगिन आत्मनि संयम आत्मसंयमः पदार्थानां लयचिन्तनं प्रविलापनं तेन चात्मनि केवले धारणाध्यानसमाधिसम्पादनं स एव योगाग्निस्तस्मिन् तैलेन दीप इव ज्ञानेन विवेकेन

दीपित उज्ज्वलतामापादिते सर्वाणीन्द्रियकर्माणि प्राणकर्माणि व्यापाराणि च जुह्वति प्रविलापयन्तीत्यर्थः ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

तीर्थेषु यज्ञबुद्ध्या द्रव्यविनियोगो द्रव्ययज्ञः स येषामस्ति ते द्रव्ययज्ञाः पूर्त्तदत्ताख्यस्मार्तकर्मपराः "वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते" ॥ शरणागत संत्राणं भूतानां चाप्यहिंसनम् । बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते" पञ्चाग्निसेवनादि तप एव यज्ञो येषां ते तपोयज्ञाः, अष्टाङ्गयोगो यज्ञो येषां ते योगिनो योगयज्ञाः, स्वाध्यायो विधिवद्वेदाभ्यासः, ज्ञानं शास्त्रार्थपरिज्ञानं च यज्ञो येषां ते स्वाध्यायज्ञानयज्ञाश्च परे भवन्ति ते सर्वे यतयो यत्नशीलाः सम्यक् शितानि सूक्ष्माणि तीक्ष्णीकृतानि व्रतानि येषां ते संशितव्रता भवन्ति । सर्वेऽहिंसादिमहाव्रतयुक्ता भवन्तीति भावः ॥ २८ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

किञ्चापानेऽपानवृत्तौ प्राणं जुह्वति प्रक्षिपन्ति पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः, एवमपरे प्राणेऽपानं जुह्वति रेचकाख्यं प्राणायामं कुर्वन्ति । पूरकरेचककथनेनान्तर्बाह्यकुम्भकावपि कथितौ, केवल कुम्भकमाह—प्राणापानयोः स्वाभाविके गती बहिरधोगमने रुध्वा प्राणायामपरायणा भवन्ति कुम्भकाख्यं प्राणायामं कुर्वन्ती-

त्यर्थः ॥ २९ ॥ नियत आहारो येषां ते नियताहारा अपरे प्राणान-जितान् विजितेषु प्राणेषु जुह्वति, अविजिता विजितेषु प्रविष्टा इव यथा भवन्ति यथा कुर्वन्ति । एते सर्वेऽपि यज्ञविदो यज्ञानां ज्ञातारः कर्तारश्च यज्ञैरुक्तैः क्षपिता, नाशिताः कल्मषाः पापानि येषां ते यज्ञक्षपितकल्मषा भवन्तिः ॥ ३० ॥

यज्ञैः पापनाशफलमुक्तमपरं फलं दर्शयन् यज्ञाभावे दोषमाह—

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ! ॥ ३१ ॥**

यथोक्तान् यज्ञान् निर्वर्त्य तेषां शिष्टेन कालेन यथाविधि चोदितमन्नममृताख्यं भुञ्जते ये ते यज्ञशिष्टामृतभुजः सनातनं ब्रह्म यान्ति, यज्ञानां शिष्टममृतं भुञ्जते तेषां सद्यः कालान्तरे वा ज्ञानसाधनशुद्ध्यादिद्वारेण ब्रह्मात्मज्ञानलाभात्, ते मोक्षं प्राप्नुवन्तीत्यर्थः । यथोक्तानां यज्ञानां मध्ये यस्यैकोऽपि नास्ति तस्यायज्ञस्यायं सर्वसाधारणोऽपि लोको नास्ति हे कुरुसत्तम ! विशिष्टसाधनसाध्योऽन्यो ब्रह्मात्मलोकस्तस्य कुतः ॥ ३१ ॥

तत्ते कर्म प्रवक्ष्यामीति प्रतिज्ञातमुपसंहरन् तत्र वेदमूलकत्वेनाप्रामाण्यशङ्कां वारयति—

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

एवं यथोक्ता बहुविधा यज्ञा ब्रह्मणो वेदस्य मुखे द्वारे वितता विस्तीर्णा वेदद्वारेण गम्यमानाः सन्ति, तान् सर्वान् कर्मजान् कायिकादिकर्मोद्भवान् विद्धि, निर्व्यापारो ह्यात्माऽतो न मे कर्माऽस्ति ममोदासीनस्य व्यापाराऽसम्भवादित्येवं ज्ञात्वाऽशुभात्

संसाराद्विमोक्ष्यसे, किञ्च यज्ञान् बुद्ध्वा तदनुष्ठानेनात्मज्ञः सन् विमोक्ष्यस इति भावः ॥ ३२ ॥

कर्मजान् विद्धि तान् सर्वानित्युक्त्या सर्वेषु ज्ञानयज्ञस्याप्युक्तत्वादितरसाम्यमाशङ्क्याह—

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ! ।
सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ॥ ३३ ॥

हे परन्तप ! देहेन्द्रियधनादिद्रव्यसाध्याद् द्रव्ययज्ञात्स्वर्गादिसंसारफलारम्भकात् फलानारम्भको नित्यसिद्धस्वरूपाभिव्यञ्जको ज्ञानयज्ञः श्रेयान् नित्यसिद्धस्वरूपभूतज्ञानफलस्य मोक्षस्याविनाशित्वात्, किञ्च हे पार्थ ! सर्वमग्निहोत्रादि लौकिकं वैदिकं कर्म ( कर्मफलं ) अखिलं निरवशेषमुक्तानुक्तं यज्ञादिकं ज्ञाने मोक्षसाधने तत्त्वसाक्षात्कारे परिसमाप्यतेऽन्तर्भवति, यतः सर्वतः संप्लुतोदकस्थानीयं हि ज्ञानं "यथाकृताय विजितायाधरेयाः संयन्ति" इत्यादि श्रुतेः ॥ ३३ ॥

एवं ज्ञानं स्तुत्वा तत्प्राप्तिसाधनमाह—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

तज्ज्ञानं विद्धि जानीहि, येन विधिना प्राप्यते तत्प्रकारं विद्धि मया कथ्यमानम्, आचार्यमभिगम्य प्रणिपातेन प्रकर्षेण नीचैः पतनं दीर्घनमस्कारस्तेन "कथं बन्धः ? कथं मोक्षः ? कस्य ? केन विमुच्यते ? । विद्याविद्ये कथंभूते ? कोऽहं ? दृश्यमिदं च किम् ?" ॥ इति परिप्रश्नेन, सेवया गुरुशुश्रूषया, एवमादिना प्रसादिताः प्रेम्णाऽभिमुखा ज्ञानिनो गुरुशास्त्रोपदेशादितः प्राप्तज्ञानास्तत्त्वदर्शिनः स्वयंकृततत्त्वसाक्षात्कारवन्तस्ते तुभ्यं यथोक्तं ज्ञानमुपदेक्ष्यन्ति

कथयिष्यन्ति. सम्यग्दर्शिभिश्चोपदिष्टं ज्ञानं कार्यक्षमं भवति नान्योपदिष्टमिति हरेर्मतम् "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्, इति श्रुतिश्च, बहुवचनमादरार्थम् ॥ ३४ ॥

ज्ञानफलमाह—

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ! ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥

हे पाण्डव ! यज्ज्ञानं ज्ञात्वा तैरुपदिष्टमधिगम्य लब्ध्वा पुनरेवमिदानीमिव मोहं भ्रमं न यास्यसि न प्राप्स्यसि, किञ्च येन ज्ञानेन चाशेषेण सर्वाणि भूतानि ब्रह्मादिस्थावरपर्यन्तानि प्रत्यगात्मनि कल्पितानि द्रक्ष्यसि, अथोऽपि च मयि परमेश्वरे तानि द्रक्ष्यसि, क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥ ३५ ॥

यथोक्तज्ञानस्य माहात्म्यमाह—

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥

असंभावितार्थाभ्युपगमार्थं निपातद्वयं, चेद्यदि त्वं सर्वेभ्यः पापेभ्यः पापकृद्भ्यः पापकृत्तमोऽतिशयेन पापकृदसि, तथापि सर्वं वृजिनं वृजिनार्णवं पापं ज्ञानमेव प्लवं पोतं कृत्वा संतरिष्यसि । समूलधर्माधर्मादिमयसंसाराद्रहितो मुक्तो भविष्यसीत्यर्थः ॥ ३६ ॥

ज्ञानेन पापनाशे दृष्टान्तमाह नाशमेव संतरणशब्दार्थं दर्शयन्—

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ! ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥

हे अर्जुन ! समिद्धोऽग्निः प्रज्वलितोऽनलो यथैधांसि काष्ठानि भस्मसात् कुरुते, साकल्ये सातिः प्रत्ययः, साकल्येन भस्मीभावं कुरुते, तथैव ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते, निर्बीजी-

करोतीत्यर्थः। यस्माज्ज्ञानेन कर्मस्वरूपस्य नाशो न भवति साक्षात्, किन्तु तद्बीजमज्ञानं ज्ञानेन साक्षाद्विनाश्यते, तस्मात्तस्य पुनरुत्पत्तिर्न भवति स्वरूपनाशे बीजसत्त्वे तु पुनरुत्पत्तिः स्यादिति भावः "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति श्रुत्या प्रारब्धकर्मणो भोगेन नाशः प्रतीयते "तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते"। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादि श्रुत्या च संचितादीनां नाशः सिद्ध्यति। अन्यत्र विस्तरो ज्ञेयः ॥३७॥

यस्मादेवं तस्मात्—

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥

ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरमिह वेदे लोके वा दैवयज्ञादौ न विद्यते, ज्ञानभिन्नस्याज्ञानानिवर्तकत्वेन समूलपापनिवर्तकत्वाभावात् तच्च पवित्रतमं ज्ञानं कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतो योग्यतामापन्नो जिज्ञासुः स्वयमेव विन्दति प्रत्यक्षं लभते महता कालेन स्वात्मन्येवान्तःकरण एव। स्वात्मविषयकमेव चाल्पकालेन शुद्ध्यभावात्। गुरुस्तु परोक्षं दर्शयति साक्षात्कारस्तु शुद्ध्या स्वयमेव भवतीति भावः ॥ ३८ ॥

ज्ञानयोगस्यान्तरङ्गसाधनवन्तमधिकारिणं फलं चाह—

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥

श्रद्धालुर्गुरूपदिष्टेर्थे सदास्तिक्यबुद्धिमान् तत्परः गुरूपासनादौ ज्ञानोपायेऽत्यन्ताभियुक्तः संयतानीन्द्रियाणि यस्य स संयतेन्द्रियो विषयेभ्यो निवर्तितेन्द्रियः, एवंविधो यः सोऽवश्यं ज्ञानं लभते,

प्रणिपातादेर्माययाऽपि संभवान्न तावन्मात्रेणावश्यं ज्ञानं लभते, श्रद्धादिवान् तु ज्ञानं लब्ध्वा परां चरमां शान्ति मोक्षरूपामचिरेण क्षिप्रमेवाधिगच्छति । ज्ञानादज्ञाननिवृत्तौ मोक्षे विलम्बाभावात्[1], सूर्याभ्युदये न क्वाप्यन्धकारस्तिष्ठतीति सर्वसम्मतमेतत् ॥ ३९ ॥

ज्ञानानधिकारिणं संशयवारणार्थमाह—

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

अज्ञ आत्मज्ञानशून्यः, अश्रद्दधानो गुरुशास्त्रधर्ममोक्षादौ श्रद्धारहितः, संशयात्मा चेदमित्थं वा न वेति संशयाक्रान्तचित्तश्च विनश्यति, तत्रापि संशयात्मा ह्यज्ञाद्यपेक्षयाऽत्यन्तं विनश्यति यतः संशयात्मनो नायं साधारणोऽपि लोकोऽस्ति संशयेन तत्साधनानुष्ठानाभावात्, नापि परलोकोऽस्ति तत्साधनोपासनाद्यसिद्धेः, न सुखं, तत्त्वज्ञानसाध्यानन्दो नास्ति, नान्यत्किञ्चिद्धर्मयश आदिसाध्यं सुखमस्ति, सर्वत्र संशयोत्पत्तेः, तस्मात्सर्वतः पापिष्ठः संशयात्माऽतो येन केनाप्युपायेन संशयो हेयो ( न कर्तव्यः ) ॥ ४० ॥

यद्यपि संशयः सर्वानर्थहेतुत्वादकर्त्तव्योऽस्ति तथापि तन्निवर्तकाभावे किं कर्तव्यमिति चेज्ज्ञानार्थमेव यत्नं कर्तव्यं तदेव तन्नाशकमित्याशयेनाह—

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ! ॥ ४१ ॥

योगेन कर्मयोगेन न्यस्तानि बन्धत्वशून्यानि कृतानि कर्माणि येन, यद्वा परमार्थदर्शनयोगेन संन्यस्तानि कर्माणि येन स

[1] "जाग्रत् स्वप्न सुषुप्त्यादि प्रपञ्चं यत्प्रकाशयते । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते" ( अ० १२।३६ ) ॥

योगसंन्यस्तकर्मा, कथमिति चेत् ज्ञानेनात्मविवेकेनात्मपरमात्मनोरेकत्वदर्शनेन संछिन्नः संशयो यस्य स ज्ञानसंछिन्नसंशयस्तमात्मवन्तमप्रमत्तं गुणा गुणेषु वर्तन्त इति निश्चयवन्तं गुणचेष्टारूपेण दृष्टानि कर्माणि न निबध्नन्ति, स्वफलं नारभन्ते हे धनंजय ! ॥ ४१ ॥

यस्मात्संशयात्मा विनश्यति यस्माच्च ज्ञानसंछिन्नसंशयः कर्मभिर्न निबध्यते—

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ! ॥ ४२ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानकर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः ॥४॥

तस्मात्पापिष्ठमज्ञानसंभूतमज्ञानाज्जातं हृदि बुद्धौ स्थितमात्मनः स्वस्य संशयमात्मविषयं संशयमेनमात्मनो ज्ञानासिना विवेकादिज्ञानमेवासिस्तेन छित्त्वा स्वात्मानुभवसाधनं कर्मयोगमातिष्ठ कुरु, युद्धाय चेदानीमुत्तिष्ठ हे भारत ! ॥ ४२ ॥

ज्ञानेन सर्वकर्माणि संन्यस्तानि भवन्ति वै ।
समूलानि न संदेहः कुर्वतोऽकुर्वतोऽपि वा ॥ १ ॥
अतोऽत्र ज्ञानमेवोक्तं कर्मसंन्यासशब्दतः ।
तच्च योगोऽपि सर्वत्र रागद्वेषादिवारणात् ॥ २ ॥
ज्ञानयोगं तथा कर्मन्यासयोगमुभावपि ।
प्रोक्तवानत्र तेनायं ज्ञानन्यासमुयोगवान् ॥ ३ ॥
स्वस्यानीशत्वबाधेन भक्तिश्रद्धे दृढीकृते ।
धीहेतुः कर्मनिष्ठा च हरिणेहोपसंहृता ॥ ४ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः ( ५ )

"निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः। शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्। सर्वं कर्माखिलं पार्थः ज्ञाने परिसमाप्यते"। इत्यादिना कर्मसंन्यासं, "छित्त्वैनं संशयं योगमातिष्ठ"-त्यनेन कर्मयोगं चोक्तवान्, तयोः परस्परविरोधादेकेन च सह कर्तुमशक्यत्वात्कालभेदेन विधानाभावादर्थात्तयोरन्यतरस्य कर्तव्यताप्राप्तौ सत्यामज्ञस्याशुद्धचित्तस्य यत्प्रशस्यतरं निश्रेयसकरं तद्बुभुत्सया—

अर्जुन उवाच

संन्यासं कर्मणां कृष्ण ! पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

हे कृष्ण ! कर्मणां शास्त्रीयाणामनुष्ठानविशेषाणां संन्यासं परित्यागं पुनस्तेषां कर्मणां योगं च कर्मानुष्ठानरूपं शंससि कथयसि । "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिशास्त्रानुसार्येव तच्छंसनमस्ति, तत्रैतयोर्मध्ये मदर्थं किं श्रेयस्तदहं न जानामि तव यच्छ्रेयः प्रशस्यतरं सुनिश्चितमभिप्रेतं तदेकं मे ब्रूहि सहोभयानुष्ठानासंभवादिति ॥ १ ॥

श्रीभगवानुवाच

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

स्वाभिप्रायमाचक्षाणो भगवान् निर्णयार्थमुक्तवान्। चित्तशुद्धि-विचारादिद्वारा ज्ञानोत्पत्तिहेतुत्वेन संन्यासः कर्मणां परित्यागः

कर्मयोगश्च कर्मणामनुष्ठानं तावुभावपि यद्यपि निःश्रेयसकरौ मोक्षप्रदौ स्तः। तथापि तयोस्तु निःश्रेयसहेत्वोर्मध्येऽविरक्तकृतात्केवलात्कर्मसन्यासात्कर्मयोगो विशिष्यते, सुकरत्वात्पातभयाभावात्सर्वलोकोपयोगित्वादधिकारसम्पादकत्वादपि चेति कर्मयोगोऽत्र स्तूयते ॥ २ ॥

सुकरत्वे हेतुमाह—

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो ! सुखं बन्धात्प्रमुच्यते ॥ ३ ॥

हे महाबाहो ! स निष्कामकर्मयोगी, नित्यं सन्यासी नित्यंसंन्यासी ज्ञेयो, ज्ञातव्योऽस्ति, यो न द्वेष्टि, दुःखे तत्साधने द्वेषं न करोति, तथा सुखं तत्साधनं च न काङ्क्षति हि यस्माद्रागद्वेषसंन्यासगुणयोगादयमपि संन्यासीति, तस्मान्निर्द्वन्द्वो द्वन्द्ववर्जितः सन्नयं ज्ञानं लब्ध्वा सुखं यथा स्यात्तथाऽनायासेन बन्धात्संसाराद्विमुच्यते ॥ ३ ॥

कर्मी न संन्यासी कर्मसंन्यासयोर्विरुद्धस्वभावत्वादुभयोरेकनिःश्रेयसफलत्वाभावेन पार्थक्यमाशङ्क्याह—

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥

संख्या सम्यगात्मबुद्धिस्तामावहतीति[1] ज्ञानान्तरङ्गसाधनतया सांख्यो विवेकादिमद्भिः कृतः संन्यासः, कर्मयोगश्च पृथगिति भिन्नफलाविति बाला अविवेकिनो वदन्ति, नतु पण्डिता विवेकिन एवं वदन्ति, यत उभयोर्मध्ये एकमपि सम्यगास्थितोऽनुष्ठितवानु-

1 तद्वहति रथयुगप्रासङ्गम्, इति यत्, यस्येति चेति लोपादिः ।

भयोः फलं ज्ञानं मोक्षं च लभते, तस्मात्फलत ऐक्यमेव न भेद इति भावः ॥ ४ ॥

उक्तं फलत ऐक्यमेवाह—

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिर्यत्पुनरावृत्तिरहितं मोक्षाख्यं स्थानं प्राप्यते, तद्योगैः कर्मयोगवद्भिरपि ज्ञानद्वारा प्राप्यते, तस्मात् सांख्यं च योगं च फलत एकमिति यः पश्यति स एव सम्यक् पश्यति ॥ ५ ॥

फलत ऐक्यमुक्त्वा पुनरपि कर्मयोगो विशिष्यत इत्युक्तमेव विशदयति—

संन्यासस्तु महाबाहो ! दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥

हे महाबाहो ! ज्ञाननिष्ठासहितः पारमार्थिकः संन्यासोऽयोगतो योगेन निष्कामकर्मणा विनाऽऽप्तुं प्राप्तुं दुःखं दुर्घटमस्ति केवलात्संन्यासादपि, योगयुक्तस्तु मुनिः मननशीलः शान्तोपद्रवः सन् परमार्थसंन्यासात्मकं ब्रह्मतत्त्वमचिरेणाधिगच्छति, परमार्थसंन्यासश्च परमात्मज्ञाननिष्ठालक्षणः "न्यास इति ब्रह्म, ब्रह्म हि परः" इतिश्रुतेः । योगेन शुद्धान्तःकरणः प्राप्तपरमार्थसंन्यासस्तु पातादिभयरहितः सन् विमुक्तो भवति, तस्मादज्ञाविरक्तकृतात्संन्यासात्कर्मयोगो विशिष्यते इति, एतच्चोक्तं प्रागेव "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसनादेव सिद्धिं समधिगच्छति" अत एकफलत्वेऽपि "कर्मसंन्यासात्कर्मयोगो विशिष्यते" इति यदुक्तं तदुपपन्नम् ॥ ६ ॥

किञ्च योगयुक्तस्य केनचिन्निमित्तेन संन्यासाभावेऽपि स—

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

सम्यग्दर्शनसाधनभूतेन योगेन युक्तो योगयुक्तोऽत एव विशुद्धान्तःकरणत्वाद्विशुद्धात्मा तस्माच्च विजितात्मा विजितदेहस्तथा विजितेन्द्रियः स ज्ञानाधिकारी ज्ञानं लब्ध्वा सर्वेषां भूतानां ब्रह्मादिस्तम्बपर्यन्तानामात्मभूतप्रत्यक्चेतनस्वरूप आत्मा प्रत्यक्चेतनो यस्य स सर्वभूतात्मभूतात्माऽखण्डात्मदर्शी सन् लोकसंग्रहाय कर्म कुर्वन्नपि न लिप्यते कर्मभिर्न बध्यते सः ॥ ७ ॥

कुर्वन्नपि कुतो न लिप्यते, इत्याकाङ्क्षायामाह द्वाभ्याम्—

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्श्रृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥८॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

युक्तः समाहितः सन् तत्त्ववित् परमार्थदर्शी मन्येत चिन्तयेत् मन्यतेऽहं नैव किञ्चित्करोमीति, तस्मात्कुर्वन्नपि न बध्यते, कदा मन्यत इति चेदाह—पश्यन् शृण्वन्नित्यादिज्ञानेन्द्रियाणां व्यापारं कुर्वन्नपि, गच्छन्निति पादयोर्व्यापारं, स्वपन्निति बुद्धेः, श्वसन्निति प्राणस्य, प्रलपन्निति वाचः, विसृजन्निति पायूपस्थयोः, गृह्णन्निति हस्तयोः, उन्मिषन्निति कूर्माख्यप्राणस्य, निमिषन्निति तस्यैव, अपेः सर्वत्र संबन्धः, एतान् व्यापारान् कुर्वन्नपीन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति नाहमसङ्ग आत्मेति धारयन् निश्चयं कुर्वन् नैव किञ्चित् करोमीति मन्यतेऽतो न लिप्यते ॥ ८-९ ॥

तत्त्वविदः कर्मालेपमुक्त्वा कर्मप्रवृत्तमुमुक्षुविवेकिनां कर्मालेपप्रकारमाह—

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१०॥**

ब्रह्मणि परमेश्वरे कर्माणि आधाय समर्प्य ब्रह्मार्पणबुद्ध्या । फले मोक्षेऽपि सङ्गं त्यक्त्वा यः कर्माणि करोति, सोऽम्भसा पद्मपत्रमिव पापेन शुभाशुभकर्मफलेन न लिप्यते ॥ १० ॥

केवल सत्त्वशुद्धिमात्रमेव तस्य फलं यस्मात्ते—

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥११॥**

योगिनः कर्मिणः केवलेन कायेनाहममादिभावविवर्जितेन देहेन, तथा केवलेन मनसा, केवलया बुद्ध्या, केवलैरिन्द्रियैरपि सङ्गं फलाभिलाषं त्यक्त्वा सत्त्वशुद्धये सर्वथेश्वरार्पणबुद्ध्यैव कर्म कुर्वन्ति नान्यफलाय ॥ ११ ॥

सङ्गत्यागस्य मोक्षपर्यन्तं फलमाह—

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥१२॥**

कर्मयोगयुक्त ईश्वराय कर्माणि करोमि न मम फलायेत्येवं समाहितः सन् कर्मफलं त्यक्त्वा परित्यज्य निष्ठायां भवां सांख्ययोगनिष्ठासम्बन्धिनीं नैष्ठिकीं शान्तिं मोक्षाख्यां सत्त्वशुद्धिज्ञानादिद्वाराऽऽप्नोति, तस्मान्न लिप्यते, अयुक्तस्तु कामस्य कारः करणं कामकारस्तेन कामकारेण कामप्रेरिततया कामतः प्रवृत्त्या फले सक्तः सन्निबध्यते । तस्मात्त्वं युक्तः सन् कर्म कुरु तव तस्यैवाधिकार इति भावः ॥ १२ ॥

एवमशुद्धचित्तस्याविदुषः संन्यासात्कर्मयोगो विशिष्यत इत्युपपादितम् । शुद्धचित्तः परमार्थदर्शी कथमास्त इत्यपेक्षायामाह—

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥१३॥

वशी जितेन्द्रियो देही देहादिव्यतिरिक्तात्मदर्शी नत्वज्ञ इव देहाभिमानेन देहात्मक आत्मज्ञानी, नित्यं नैमित्तकं काम्यं प्रतिषिद्धं च सर्वाणि कर्माणि मनसा विवेकबुद्ध्या कर्मादावकर्मदर्शनेन संन्यस्य परित्यज्य नवद्वारयुक्ते पुरे देहे सुखमास्ते त्यक्तवागादिव्यापारो निरायासः प्रसन्नचित्तः प्रारब्धवशाद्देहे तिष्ठति दुःखहेतुसर्वव्यापारोपरमात्, अज्ञस्तु देहात्माभिमानित्वाद्गेहादौ तिष्ठतीति भावः । स्वात्मनोऽसङ्गत्वदर्शित्वाच्च नैव कुर्वन् नैव कारयन्श्चाऽऽस्ते ॥ १३ ॥

नैव कुर्वन्न कारयन्नित्युक्तं प्रपञ्चयति—

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥

प्रभुरात्मा लोकस्य देहादेः कर्तृत्वं न सृजति, त्वं कुर्विति नियोगेन तस्य कारयिता न भवतीत्यर्थः । लोकस्य घटादिकर्माणि साध्यानि न सृजति कर्तापि न भवतीत्यर्थः । घटरथादिकृतवतस्तत्फलेन संयोगं न सृजति भोजयितापि भोक्तापि न भवतीत्यर्थः । कस्तर्हि सृजतीत्यपेक्षायामाह—स्वभावो मायालक्षणा प्रकृतिः कुर्वन् कारयन् प्रवर्तते "सुखदुःखे न देहस्य सर्वातीतस्य नात्मनः । एतेह्यज्ञानकस्यैव तस्मिन्नष्टे न कस्यचित्" । ( योगवा० ५।५।३४ ) ॥ १४ ॥

"एष ह्येव साधुकर्मकारयती"ति श्रुत्या, "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा," इति स्मृत्या च कारयितृत्वभोजयितृत्वे प्रसक्ते, तथेश्वरैकशरणानां पुण्यपापग्रहीतृत्वं प्रसक्तं, तत्सर्वं वारयति—

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥ १५॥

परमार्थतो विभुः सर्वात्मा परमेश्वरः कस्यचित् स्वभक्तस्यापि पुण्यं पापं वा नादत्ते, भक्त्यादिना पापं न गृह्णाति, न समर्पितं पुण्यं गृह्णाति; असङ्गत्वात्पूर्णकामत्वाच्च, परमार्थतो जीवस्य कर्तृत्वाभावात्, ईश्वरस्य कारयितृत्वाभावाच्चेति, कथं तर्हि लोके जना ईश्वरार्थं कर्माणि कुर्वन्तीत्याशङ्क्याह—अज्ञानेन कर्तृत्वादिविमुक्तोऽहमिति विवेकज्ञानमावृतं तेन जन्तवो मुह्यन्ति भेदादिकं कल्पयन्ति, परमार्थतस्तु भेदादिकं नास्त्येव॥ १५॥

तर्हि सर्वेषामनाद्यज्ञानावृतज्ञानत्वात्संसारनिवृत्तिः कथं स्यादिति चेदाह—

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥ १६॥

तदुक्तं कर्तृत्वादि विमुक्तमहमिति विवेकज्ञानावरकमात्मविषयकमज्ञानमात्मनो ज्ञानेन गुरूपदेशादिजन्येन येषां ज्ञानाधिकारयुक्तानां मुमुक्षूणां नाशितं भवति, तेषामादित्यतुल्यं तज्ज्ञानमज्ञान निवर्त्य तत्परं तत्परमार्थतत्त्वं ज्ञानस्वरूपमेव प्रकाशयति। यथा सूर्यः सामान्येन भातं वस्तु विशेषतो भासयति, तथा गुरूपदिष्ट ज्ञानं सामान्येन भातं विशेषतो ज्ञानं प्रकाशयतीति भावः॥ १६॥

परमार्थतत्त्वज्ञानेन तत्प्रकाशे सति—

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।

गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

यत् परं ज्ञानं तत्त्वं प्रकाशितं तस्मिन् तत्त्वे गता बुद्धिर्येषां ते तद्बुद्धयः, तदेव परं ब्रह्मात्मा स्वरूपं येषां ते तदात्मानस्तद्गतमनसश्च यतस्तस्मिन्नेव निष्ठा स्थितिः प्रीतिरभिनिवेशो ध्यानं येषां ते तन्निष्ठा यतस्तदेव परमयनं परागतिः परं प्राप्तव्यं येषां ते तत्परायणा एवंविधाः केवलात्ममतयोऽपुनरावृत्तिं मोक्षं गच्छन्ति यतो ज्ञानेन यथोक्तेन नाशितः कल्मषो दोषो धर्माधर्मादिस्वरूपो येषां ते ज्ञाननिर्धूतकल्मषास्ते भवन्ति ॥ १७ ॥

ज्ञाननाशिताज्ञानानां समदृष्टितामाह—

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।

शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

विद्या आत्मबोधो विनय उपशम औद्धत्याद्यभावस्ताभ्यां सम्पन्ने सात्त्विके ब्राह्मणे उत्तमे, मध्यमायां च राजस्यां गवि, केवलतामसे हस्तिनि शुनि श्वपाके चैव कनिष्ठे ये समदर्शिनस्ते सत्त्वादिगुणैरस्पृष्टसमात्मदर्शित्वात् पण्डिता भवन्ति ॥ १८ ॥

ननु विषमेषु निषिद्धं समदर्शनं कुर्वन्तः कथं पण्डिताः, यथाह गौतमः । "समाऽसमाभ्यां विषमसमपूजातः" समाय पूजाया विषमे प्रकारे कृते, विषमाय समे कृते च सति स पूजको धनाद्धर्माद्धीयतेऽभोज्यान्नश्च भवतीति चेन्न स्मृतेर्लोकविषयत्वादिति दर्शयन् समदर्शनस्थितिफलमाह—

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥१९॥

येषां मनः साम्ये सर्वभूतेषु ब्रह्मणः समभावे स्थितं निर्दोषं सन्निश्चलीभूतं जातं तैः समदर्शिभिः पण्डितैरिहैव जीवद्भिरेव सर्गो जन्मादि संसारो जितो वशीकृतोऽतिक्रान्तो हि यस्मान्मनोस्थितिविषयो ब्रह्म निर्दोषं चाण्डालादिदोषास्पृष्टं तस्मात्समं सर्वत्रैकरूपं कूटस्थनित्यमसङ्गत्वान्निर्गुणत्वाच्च, तस्मात्साम्यं पश्यन्तस्ते पण्डिता निर्दोषे ब्रह्मणि स्थितास्तस्मान्न दोषगन्धमात्रमपि तान् स्पृशति ॥ १९ ॥

यस्मान्निर्दोषं समं ब्रह्म तस्मात्तद्रूपमात्मानं पश्यन्—

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥२०॥

स्थिरा निश्चला संशयादिरहिता ब्रह्माकारा बुद्धिर्यस्य स स्थिरबुद्धिरत एवासंमूढो ध्यानादिना निर्गतमोहो ब्रह्मविद्ब्रह्मसाक्षात्कारवाञ्ज्ञानी निर्दोषे ब्रह्मण्येवस्थितो नान्यत्रातो यत्किञ्चित्प्रियं प्राप्य न प्रहृष्येन्न हर्षं कुर्यादप्रियं च प्राप्य नोद्विजेत्, इति स्वभावसिद्धमेतत् ॥ २० ॥

ससाधनं ब्रह्मस्थितफलमाह—

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥२१॥

स्पृश्यन्त इति स्पर्शा बाह्याश्च ते स्पर्शा बाह्यस्पर्शास्तेष्वसक्त आत्मा अन्तःकरणं यस्य स विषयप्रीतिरहितः सन् आत्मनि त्वं पद लक्ष्ये यत्सुखं तद्विन्दते लभते, स ब्रह्मणि तत्पदलक्ष्ये योगः समाधिः

त्वंपदलक्ष्यस्य तत्पदलक्ष्येनैकत्वापादनं तेन युक्त आत्माऽन्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा स जीवन्नेवाक्षयं सुखमश्नुते व्याप्नोति "इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च। अहिंसया च भूतानाममृतत्वाय कल्पते" ( मनुः ६।६० )। तस्मादक्षयसुखार्थी क्षणिकाया विषयप्रीतेरिन्द्रियाणि निवर्तयेदिति भावः ॥ २१ ॥

विषयप्रीतिनिवृत्तये तद्दोषानाह—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।
आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुधः ॥२२॥

हि यस्माद्विषयेन्द्रियसंस्पर्शेभ्यो जाताः संस्पर्शजा विषयेन्द्रियसम्बन्धजा ये भोगाः क्षुद्रसुखलवानुभवा इह वा परत्र वा ते सर्वेऽविद्याकृतत्वाद्रागद्वेषादिव्याप्तत्वेन च दुःखानामाध्यात्मिकानां योनयः कारणान्येव सन्ति, तस्मान्नात्र प्रीतिर्युक्ता भवति। किञ्च न केवलं दुःखयोनयोऽपि त्वाद्यन्तवन्तस्तस्मात्स्वप्नवत् क्षणिका मिथ्याभूताः सन्ति, तस्माद् बुधो विवेकी तेषु न रमते, किन्तु सदाऽक्षये ब्रह्मानन्दे रमते, हे कौन्तेय ! तवापि तदेवोचितम् ॥ २२ ॥

कामक्रोधवेगस्य सर्वानर्थहेतुत्वात्तत्परिहारे यत्नाधिक्यविधानायाह भगवान्—

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात्।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥

इहैव जीवन्नेव मानवे देहे लोके शरीरविमोक्षणात् प्राक् पूर्वमामरणात्-मरणपर्यन्तं, यः कामक्रोधोद्भवं कामक्रोधजन्यं रोमाञ्चहृष्टनेत्रगात्रकम्पादिलिङ्गज्ञेयं वेगं चित्तक्षोभरूपं सर्वदा सम्भाव्यमानं सोढुं प्रसहितुं निरोद्धुं शक्नोति, वशीकारसंज्ञकवैराग्यदोषदर्शनादिना यस्तदनुकूलव्यापारं न करोति, नदीवेगवदनर्थकारणं

ज्ञात्वा, स एव युक्तः समाहितो योगी भवति, सुखी चेह लोके भवति, तथा स एव नरो मनुष्योऽस्ति पुरुषार्थस्य सम्पादनात्, तदन्यस्तु पशुवदाहारनिद्रादिमात्ररतत्वेन मनुष्याकारः पशुरेव ॥२३॥

कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह—

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥

कामादिवेगनिवारणेन श्रवणादिना ज्ञानं लब्ध्वा योऽन्तःसुखोऽन्तरात्मन्येव सुखं यस्य, तथाऽन्तरारामोऽन्तरात्मन्येवाराम आक्रीडा यस्य, न तु बाह्ये पदार्थे, तथाऽन्तरात्मैव ज्योतिःप्रकाशो यस्य स ज्ञानयोगी ब्रह्मभूत एव सन् ब्रह्मनिर्वाणं ब्रह्मनिर्वृत्तिं ब्रह्मानन्दं मोक्षमधिगच्छति प्राप्नोतीति "इह चेदवेदीदथ सत्यमस्ति" "ब्रह्मैव सन् ब्रह्माप्येति" इत्यादि श्रुतेः ॥ २४ ॥

ब्रह्मप्राप्तेः साधनान्तराणि ब्रह्मस्थस्य लक्षणं चाह—

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

क्षीणकल्मषाः सत्कर्मभक्त्यादिना क्षीणपापादिदोषाः, श्रवणमननाभ्यां छिन्नद्वैधाः छिन्नसंशयाः, निदिध्यासनेन संयतात्मानः संयतेन्द्रियचित्ताः सर्वेषां भूतानां हिते रता अनुकूले तत्पराः सर्वहितचिन्तका अहिंसका ऋषयः सम्यग् ब्रह्मदर्शिनो ब्रह्मनिर्वाणं लभन्ते ॥ २५ ॥

पूर्वं कामक्रोधजन्यवेगसहनमुक्तमिदानीं तत्स्वरूपत्यागमाह—

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

कामक्रोधरहितानां यतीनां यत्नशीलानां यतचेतसां संयतचि-

त्तानां विदितात्मतत्त्वानामभित उभयतो जीवतां मृतानां च सर्वत्र सर्वावस्थासु ब्रह्मनिर्वाणं मोक्षो वर्तते, मोक्षस्य नित्यात्मस्वरूपत्वात् ॥ २६ ॥

सांख्ययोगिनां सद्योमुक्तिं कर्मयोगं च ज्ञानसाधनमुक्त्वेदानीं ध्यानयोगस्य ज्ञानान्तरङ्गसाधनस्य सूत्रस्थानीयान् श्लोकानाह—

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥

स्पर्शान् बाह्यानेव शब्दादीन् श्रोत्रादिद्वारेणान्तर्बुद्धौ प्रविष्टान् अचिन्तनेन बहिः कृत्वा परवैराग्येण तत्तदाकारां वृत्तिमनुत्पाद्य, चक्षुश्चैव धारणयाऽन्तरे भ्रुवोः कृत्वा, नासाभ्यन्तरचारिणौ प्राणापानौ प्राणायामेन समौ कृत्वा कुम्भकेन निरुद्धौ कृत्वा ॥२७॥ प्रत्याहारेण यतानि संयतानीन्द्रियाणि मनो बुद्धिश्च यस्य स यतेन्द्रियमनोबुद्धिर्मुनिर्मननशीलो मोक्ष एव परमयनं परागतिर्यस्य स विरक्तो मुमुक्षुर्भवति । यस्तु सदा विगता इच्छाभयक्रोधा यस्मात्स विगतेच्छाभयक्रोधः स मुक्त एव न तस्य मोक्षोऽन्यो वा कर्तव्योऽस्ति ॥ २८ ॥

एवं योगयुक्तः किं साक्षाद्योगादेव मुच्यते ज्ञानद्वारेण वेति संशयनिवृत्तये पुनराह—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

कर्तृरूपेण देवतारूपेण च यज्ञतपसां भोक्तारं भोगकर्तारं पालकं वा, तथा सर्वेषां लोकानां महान्तमीश्वरं नियन्तारं सर्वप्राणिनां सुहृदं प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वभूतानां हृदयेशं मां सर्वात्मनमीश्वरमात्मभावेन ज्ञात्वा साक्षात्कृत्य शान्तिं सर्वसंसारोपरतिं मुक्तिमृच्छति प्राप्नोति । "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादि श्रुतिः ॥ २९ ॥

सुकर्मणा ह्यकामेन क्रियायोगाभिधेन वै ।
विपापो धारणादौ च योग्यो ज्ञानी विमुच्यते ॥ १ ॥
बन्धहेतुर्हि यत्कर्म निष्कामेन कृतं भवेत् ।
संन्यस्तं शोधकं बुद्धेर्योगाख्यां लभते हि तत् ॥ २ ॥
कर्मयोगेन शुद्धात्मा ध्यानयोगेन निश्चलः ।
गुरुवाक्यात्परं लब्ध्वा ह्यात्मारामोऽमलो भवेत् ॥ ३ ॥
अनेक साधनाभ्यासनिष्पन्नं हरितोषजम् ।
स्वस्वरूपपरिज्ञानं केवलं मुक्तिसाधनम् ॥ ४ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः ( ६ )

पञ्चमाध्याये ध्यानयोगस्य सूत्रभूताः श्लोका उक्ताः, तद्वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते, तत्र तदधिकारसम्पत्तयेऽधिकृतेन कर्तव्यं कर्मैवेत्यतस्तत्स्तौति—

श्रीभगवानुवाच

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥

कर्मणः फलमनाश्रितः कर्मफलतृष्णारहितः सन् कार्यमवश्यकर्तव्यं काम्यविपरीतं कर्म यः करोति स संन्यासी च योगी चेति कर्मान्तरेभ्यो विशिष्ट इति गौणप्रयोगेण स्तूयते, तथा च संन्यासः परित्यागः, योगश्चित्तसमाधानं चेत्युभयगुणसम्पन्नोऽयं यद्यपि न निरग्निर्नाग्निसाध्यश्रौतकर्मत्यागी न चाक्रियो नापि स्मार्ताद्यग्निनिरपेक्षक्रियात्यागवांश्चित्तवृत्तिनिरोधवांस्तथापि संन्यासी योगी चेति मन्तव्यः फलत्यागेन चित्तविक्षेपाभावात् ॥ १ ॥

गौणप्रयोगे निमित्तभूतं गुणयोगमेव दर्शयितुमाह—

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ! ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

यं सर्वकर्म तत्फलत्यागलक्षणं परमार्थसंन्यासमिति श्रुतिस्मृतयः प्राहुः, हे पाण्डव ! योगं कर्मयोगं तं परमार्थसंन्यासं विद्धि फलविषयसंकल्पत्यागरूपगुणयोगादेवं जानीहि, हि यस्मादसंन्यस्तसंकल्पोऽत्यक्तफलाभिसन्धिः कश्चन कश्चिदपि कर्मी योगीसमाधानवान् कर्मयोगी नहि भवति संन्यस्तसंकल्प एव भवति । फलत्यागतृष्णारूपचित्तवृत्तिनिरोधवानेव भवतीति भावः । तस्मा-

त्संकल्पसंन्यास उभयत्र समः, कर्मयोगिषु फलसंकल्पस्यैव संन्यासोऽन्यत्र कर्मफलोभयसंकल्पस्येति विशेषः ॥ २ ॥

प्रशस्तत्वाद्यावज्जीवं कर्मयोगकर्तव्यतायां प्राप्तायामाह—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

योगं ध्यानयोगमारुरुक्षोरारोढुमिच्छतो ध्यानयोगेऽनारूढस्यावस्थातुमसमर्थस्य मुनेः कर्मफलसंन्यासिनः कर्म फलाभिसन्धिरहितं ध्यानयोगारोहणे कारणं साधनमुच्यते, तस्यैव कर्मिणो योगाऽऽरूढस्य प्राप्तध्यानयोगस्य शम एव योगारूढत्वस्य साधनमुच्यते, यावद्यावच्छम उपशमः कर्मभ्यो विनिवृत्तिर्भवति, तावत्तावन्निरायासस्य चित्तं समाधीयते । "नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः" । इति भाष्ये भगवतो व्यासस्य वचनम् । तत्र दण्डनिधानमहिंसनम् ॥ ३ ॥

कदा योगारूढो भवतीत्यपेक्षायामाह—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

यदा यस्मिन् चित्तसमाधानकाले, समाधीयमानचित्तो योगी हीन्द्रियार्थेषु शब्दादिषु कर्मसु च नित्यनैमित्तिकादिषु नानुषज्जते, तेषां मिथ्यात्वदर्शनेनात्मनोऽसङ्गत्वादिज्ञानेन च प्रयोजनाभावादिबुद्ध्याऽनुषङ्गं कर्तव्यताबुद्धिं न करोति, यतः सर्वेषां सङ्कल्पानां कर्मतत्फलविषयानां संन्यासीति वा सर्वान् सङ्कल्पान् संन्यसितुं शीलमस्येति वा स सर्वसङ्कल्पसंन्यासी तदा योगारूढः प्राप्तयोग उच्यते, सर्वसङ्कल्पसंन्यासात्कामसंन्यासोऽपि भवति, कामस्य

संकल्पमूलत्वादिति कर्मणोऽपि संकल्पमूलत्वं प्रसिद्धं ततः संकल्पत्यागात्तत्त्यागोऽप्यर्थात्सिद्धो भवतीति ॥ ४ ॥

यदैवं योगारूढस्तदा तेनात्मात्मनोद्धृतो भवति संसारानर्थव्रातादतो योगारूढत्वसम्पादनेन—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

संसारसागरे निमग्नमात्मानमात्मना ( स्वं स्वेन ) उद्धरेत् तत ऊर्ध्वं नयेत्, योगारूढतामापादयेत्, न तु विषयासङ्गेनाऽवसादयेदात्मानं नाऽधो नयेत्, हि यस्मादात्मैवात्मनो बन्धुः संसारान्मोचको नान्यः कश्चिल्लौकिको बन्धुः, स हि स्नेहादिना बन्धहेतुरेव, तथाऽऽत्मैवात्मनो रिपुरपि नान्यः स हि स्वात्मप्रयुक्त एव शत्रुर्भवति ॥ ५ ॥

कस्यात्मा बन्धुः कस्य रिपुरित्याह—

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

आत्मा कार्यकरणसंघातो येन जितो वशीकृतस्तस्य श्रेयोभिमुखस्य जितेन्द्रियस्यात्मन आत्मैव बन्धुः सेन्द्रियमन एव बन्धुवद् भवति स्वयं वा स्वस्य बन्धुर्भवति । अनात्मनोऽजितात्मनोऽजितसंघातस्य शत्रुत्वे त्वात्माऽन्तःकरणं स्वयमेव वा शत्रुवद् वर्तेत, यथाऽनात्मा शत्रुरात्मनोऽपकारी तथाऽऽत्माऽऽत्मनोऽपकारे वर्तेत स्वस्य स्वेनानिष्टमाचरेदित्यर्थः ॥ ६ ॥

जितात्मनः स्वबन्धुत्वे फलमाह—

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

जित आत्मा कार्यकरणसंघातो येन तस्य जितात्मनः प्रशान्तस्य प्रसन्नान्तःकरस्य समबुद्धया रागद्वेषशून्यस्य यस्य शीतोष्णादिषु तथा मानापमानयोश्च समत्वेन परमात्मा समाहितः साक्षादात्मभावेन समाधिविषयो वर्तते ॥ ७ ॥ यस्य समाहितः परमात्मा वर्तते स एव ज्ञानविज्ञानाभ्यां तृप्त आत्मा यस्य स ज्ञानविज्ञानतृप्तात्मा कूटस्थो विषयादिनाऽप्रकम्प्योऽत एव विजितानीन्द्रियाणि यस्य स विजितेन्द्रियः समानि लोष्टादीनि यस्य स समलोष्टाश्मकाञ्चनः स योगी युक्तः समाहितो योगारूढ इत्युच्यते प्राप्तयोगत्वात् ॥ ८ ॥ अथवा जितात्मनः प्रशान्तस्य विजितचित्तस्य योगारूढस्यैव परमात्मा शुद्धस्तत्पदार्थः समाहितः साक्षादात्मभावेन वर्तते । अतः स जीवन्मुक्तत्वादेव शीतादिषु समः स्यादित्याध्याहारः ॥ ७ ॥ किञ्च ज्ञानादितृप्तादिस्वरूपो योगी युक्तो यथार्थयोगयुक्त इत्युच्यते ॥ ८ ॥

सुहृन्मित्रादिषु समबुद्धिस्तु सर्वयोगिभ्यः श्रेष्ठ इत्याह—

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

सुहृन्निरपेक्षोपकारी, मित्रं स्नेहेनोपकारकः, अरिःशत्रुः, उदासीनः पक्षपातशून्यः, मध्यस्थ उभयहितैषी, द्वेष्योऽप्रियः, बन्धुः सम्बन्धीत्येतेषु साधुषु शास्त्रानुवर्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः, कः किंकर्मेत्यव्यापृतबुद्धिः सर्वत्र रागद्वेषशून्यो यः स विशिष्यते योगारूढानां सर्वेषां मध्ये स उत्तम इति ॥ ९ ॥

योगारूढस्य लक्षणं फलं च प्रदर्शितमीदृशोत्तमफलप्राप्तये योगारूढतां सम्पादयेदित्याह—

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

यतौ वशीकृतौ चित्तात्मानौ मनोदेहौ यस्य स यतचित्तात्मा, निराशीः फलेच्छाहीनः, अपरिग्रहः संग्रहशून्यः, रहसि-एकान्ते गिरिगुहादौ, एकाकी सहायवर्जितः स्थितः सन् योगी ध्यानी सततं सदा निरन्तरमात्मानमन्तःकरणं युञ्जीत समादध्यात् निरुन्ध्यादेकाग्रं कुर्यादिति ॥ १० ॥

योगी युञ्जीतात्मानमित्युक्तं तत्कथमित्याकाङ्क्षायां तदङ्गान्यासनादीन्याह—

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

शुचौ स्वभावतः संस्कारतो वा शुद्धे निर्भये समे देशे स्थाने नात्युच्छ्रितं नात्युच्चं नात्यतिनीचं चैलमजिनं कुशाश्चोत्तरे यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरमादौ कुशानां स्थापनं तदुपर्यजिनं मृगचर्म तदुपरि चैलं मृदुवस्त्रमित्येतादृशमात्मनः स्वकीयं स्थिरं निश्चलमासन प्रतिष्ठाप्य प्रतिष्ठितं कृत्वा ॥ ११ ॥ तत्रासने उपविश्यात्मशुद्धयेऽन्तःकरणस्य शुद्ध्यर्थं मन एकाग्रं कृत्वा किञ्च चित्तं चेन्द्रियाणि च तेषां क्रिया संयता यस्य स यतचित्तेन्द्रियः सन् योगं समाधिं युञ्ज्यादभ्यसेत् ॥ १२ ॥

शरीरधारणवर्णनेन ध्यानप्रकारमाह—

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

आसने स्थिरो भूत्वा कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत्सममवक्रमचलं निष्कम्पं च धारयन् स्वं नासिकाग्रं संप्रेक्ष्येव दिशश्चानवलोकयन् सन्नासीतेति सम्बन्धः। नासिकाग्रसंप्रेक्षणमत्र न विधित्सितं किन्तु चक्षुषो बाह्यान्निरोधो विवक्षितस्तस्मादिव-शब्दाध्याहारो ज्ञेयः। आत्मनि समाधीयमानस्य मनसो लयवि-क्षेपादिवारणायायमुपदेशः ॥ १३ ॥ किञ्च प्रकर्षेण शान्तो रागा-दिरहित आत्माऽन्तःकरणं यस्य स प्रशान्तात्मा विगतभीरभयो ब्रह्मचारिणो व्रतं ब्रह्मचर्यादि तस्मिन् स्थितः, मनः संयम्य विषया-कारवृत्तिशून्यं कृत्वा मयि परमेश्वरे चित्तं यस्य स मच्चितः, तथा-ऽहमेव परः पुरुषार्थः परमानन्दरूपत्वात् प्रिय उत्तमो यस्य स मत्परश्च युक्तः समाहितः सन्नासीत ॥ १४ ॥

अथेदानीं योगफलमाह—

युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

एवमुक्तविधिना, आत्मानं मनः सदा युञ्जन् समाधानं कुर्वन् नियतं संयतं मानसं मनो यस्य स नियतमानसो योगी निर्वाणं मोक्षः परमा निष्ठा यस्याः शान्तेस्तां निर्वाणपरमां मत्संस्थां मद-धीनां मत्स्वरूपानन्दात्मनिष्ठां शान्तिमधिगच्छति योगेनाराधिता-

त्सर्वेश्वरात्प्राप्नोति, वक्ष्यति च "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते" ॥ १५ ॥

योगिन आहारादिनियमं वक्तुं प्रथमं व्यतिरेकमाह—

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ! ॥ १६ ॥

अत्यश्नत आत्मसम्मितादन्नादधिकमश्नतो योगो नास्ति, एकान्तमत्यन्तं नियमेनानश्नतोऽभुञ्जानस्य च योगो नास्ति, उभयथापि रोगादिसंभवात् "यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति, यद्भूयो हिनस्ति, तद्यत् कनीयो न तदवति" इति श्रुतिः। एवमतिस्वप्नशीलस्यातिनिद्रास्वभावस्यातिजाग्रतश्च योगो न भवति ॥ १६ ॥

अन्वयमाह—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

आह्रियत इत्याहारोऽन्नं, विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य, युक्ता नियता सर्वेषु कर्मसु चेष्टा यस्य युक्तौ परिमितौ नियतकालौ स्वप्नावबोधौ निद्राजागरौ यस्य तस्य युक्ताहारविहारस्य युक्तचेष्टस्य युक्तस्वप्नावबोधस्य योगिनो योगो दुःखहा संसारदुःखक्षयकृद् ज्ञानद्वारा भवतीति ॥ १७ ॥

कदा योगयुक्तो भवतीत्युच्यते—

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

यदा यस्मिन् काले यस्य योगिनश्चित्तं विवेकपरवैराग्यबलाद्

विशेषेण नियतमेकाग्रतामापन्नं निरुद्धं सत् बाह्यचिन्तां हित्वाऽऽत्मन्येवावतिष्ठते, तदा सर्वकामेभ्यो दृष्टादृष्टविषयेभ्यो निर्गता स्पृहा यस्य स निःस्पृहो योगी युक्तः समाहित इत्युच्यते ॥ १८ ॥

योगिनः समाहितस्य चित्तस्योपमानमाह—

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥

निवाते देशे स्थितो निवातस्थो दीपो यथा नेङ्गते न चलति सा उपमीयतेऽनयेति उपमा स्मृता चिन्तिता दृष्टान्तश्चिन्तितो योगज्ञैः, कस्येति चेदात्मन आत्मविषयं योगं समाधिं युञ्जतोऽनुतिष्ठतो योगिनो यद् यतं संयतं च चित्तं यतचित्तं तस्य संयतस्यान्तःकरणस्योपमा स्मृतेत्यर्थः ॥ १९ ॥

सामान्येन समाधिमुक्त्वा निरोधसमाधिमसंप्रज्ञाताख्यमाह—



यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥२०॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

निवातस्थदीपतुल्यं यत्र यस्मिन् काले यस्मिन्नवस्थाविशेषे योगसेवया योगानुष्ठानेन निरुद्धं निवारितप्रचारं चित्तमुपरमते उपरतिं

भजते, यत्र यस्मिंश्चावस्थाविशेषे, आत्मना समाधिशुद्धेन मनसाऽऽत्मानं परमात्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन्नुपलभमानः स्वात्मन्येव तुष्यति परमात्मनः स्वात्मन्येवानुभवादतुष्टिकारणस्याज्ञानादेरभावात्तुष्टो भवतीत्यर्थः ॥ २० ॥ यत्र चेन्द्रियनिरपेक्षया बुद्ध्या गृह्यत इति बुद्धिग्राह्यमत एवातीन्द्रियमिन्द्रियगोचरातीतमविषयजन्यमत्यन्तमेव भवतीत्यात्यन्तिकम्, अनन्तं यत् सुखं तद् योगी वेत्ति, यत्र स्थितश्चायं तत्त्वस्वरूपान्न चलति न प्रच्यवते, तत्त्वस्वरूपे सम्यगवस्थानात् ॥ २१ ॥ किञ्च यमवस्थाविशेषमात्मलाभं वा लब्ध्वा प्राप्य ततोऽधिकं लाभान्तरं न मन्यते यस्मिंश्चावस्थाविशेष आत्मतत्त्वे स्थिता गुरुणापि दुःखेन न विचाल्यते ॥ २२ ॥ यत्रोपरमत इत्यारभ्योक्तमात्मावस्थाविशेषं तं दुःखैः संयोगो दुःखसंयोगस्तेन वियोगो दुःखसंयोगवियोगस्तं योग इति संज्ञितं योगसंज्ञितं विपरीतलक्षणेन विजानीयात् । योगफलमुपसंहृत्य पुनः प्रकारान्तरेण योगस्य कर्तव्यतोपदिश्यते निश्चयानिर्वेदयोर्योगसाधनत्वविधानार्थं स योगो निर्वेदरहितेन चेतसा निश्चयेन योक्तव्योऽभ्यसनीयोऽस्ति ॥ २३ ॥

साधनान्तराण्यपि विधत्ते—

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥
शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥२५॥

सङ्कल्पोऽशोभने विषये शोभनत्वाध्यासः स प्रभवः कारणं येषां तान् सङ्कल्पप्रभवान् सर्वान् कामानशेषतो निर्लेपेन सवासनान् त्यक्त्वा विवेकयुक्तेन मनसा समन्ततः सर्वस्माद्विषयादिन्द्रियग्राम-

मिन्द्रियसमूहं विनियम्य निरुध्य ॥ २४ ॥ धृतिगृहीतया धैर्येण गृहीतया बुद्ध्या आत्मसंस्थमात्मैवसर्वमित्येवं मनः कृत्वा शनैः शनैरुपरमेदुपरतिं सम्पादयेत् पुनरात्मान्यत्किञ्चिन्न चिन्तयेदेष योगस्य परमोऽवधिर्यो योगो निश्चयेनावश्यकर्तव्यबुद्ध्या अखिन्नेनेव चेतसा चाभ्यस्यत इति ॥ २५ ॥

मनसः स्थिरतासम्पादनप्रकारमाह पूर्वश्लोकव्याख्यानेन—

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

एवमात्मसंस्थं मनःकर्तुं प्रवृत्तो योगी यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेश्चञ्चलमत एवास्थिरं मनो निश्चरति निर्गच्छति, ततस्ततस्तस्मात्तस्माच्छब्दादेस्तत्तद्दोषनिरीक्षणेन मनो-नियम्य निरुध्यैतन्मन आत्मन्येव वशं नयेदात्मवश्यतामापादयेदेवं योगाभ्यासबलादात्मन्येव मनः शाम्यति ॥२६॥

वशीकरणेन मनस उपरमे फलमाह—

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

उक्तरीत्या प्रशान्तं ब्रह्मणि लीनं मनो यस्य तं प्रशान्तमनसं यतो हि शान्तरजसं क्षीणमोहादिविक्षेपमतो ब्रह्मभूतं ब्रह्मैव सर्वमिति निश्चयवन्तं जीवन्मुक्तमत एवाकल्मषं धर्माधर्मादिवर्जितमेनं योगिनमुत्तमं निरतिशयं सुखमुपैति प्राप्तं भवतीति ॥ २७ ॥

उत्तमं सुखमुपैतीत्युक्तं स्फुटयति—

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

एवं मनसैवेन्द्रियग्रामम्, इत्याद्युक्तक्रमेणात्मानं मनः सदा युञ्जन् समादधत् योगी योगान्तरायवर्जितो योगेन नित्यसम्बन्धी विगतकल्मषो विगतपापः सन् अनायासेन सुखेन, ब्रह्मणा परमात्मना संस्पर्शोऽभेदो यस्य तद् ब्रह्मसंस्पर्शं ब्रह्माभिन्नमत्यन्तं निरतिशयमविनश्वरं सुखमश्नुते व्याप्नोति "यो वै भूमा तत् सुखं नाल्पे सुखमस्ति"। "यो वै भूमा तदमृतमथयदल्पं तन्मर्त्यम्" इति श्रुतिश्च ॥ २८ ॥

योगफलं ब्रह्मात्मदर्शनं दर्शयति—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

सर्वत्र सर्वेषु भूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनो योगयुक्तात्मा समाहितान्तःकरणो योगी सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वात्मानमीक्षते पश्यति, तथा सर्वाणि भूतानि चात्मन्येकतां गतानि पश्यति ॥ २९ ॥

एकत्वदर्शनस्य फलमाह—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

यो योगी मां परमात्मानं प्रत्यगभिन्नं सर्वत्र सर्वभूतेषु पश्यति साक्षात्करोति, सर्वं च भूतजातं मयि सर्वात्मनि पश्यति तस्यात्मैकत्वदर्शिनोऽहमीश्वरः प्रत्यगभिन्नो न प्रणश्यामि परोक्षोऽदृश्यो न भवामि स विद्वानपि च मे न प्रणश्यति मम परोक्षोऽदृश्यो न भवति तस्य मम चैकत्वात् । यद्यपीश्वरस्याविद्वानपि न परोक्षस्तथापि स्वाविद्यया व्यवहितत्वान्नष्टप्रायता तस्येति भावः ॥ ३० ॥

पूर्वश्लोकार्थं सम्यग् दर्शनं पूर्वार्धेनानूद्य तत्फलं मोक्षमाह—

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

एकत्वमहं ब्रह्मास्मीत्येवमास्थितः सम्यगपरोक्षीकृतवान् यो योगी सर्वात्मानं मां भजति समाधिना सेवते। स सर्वथा सर्वप्रकारेण प्रारब्धानुसारेण वर्तमानो व्यवहरन्नपि मयि परमेश्वरे वैष्णवे परमे पदे वर्तते, नित्यमुक्त एव स न मोक्षं प्रति केनचित्प्रतिबध्यते रागद्वेषाद्यभावेन तस्य धर्माद्यनुत्पत्तेः ॥ ३१ ॥

सर्वथेत्याद्युक्त्या तस्य भूताहितकरीं प्रसक्तां प्रवृत्तिं वारयति—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ! ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥



उपमाया भाव औपम्यमात्मैवौपम्यमात्मौपम्यं तेनात्मदृष्टान्तेन यः सर्वत्र सर्वभूतेषु सुखं वा यदि वा दुःखं, सुखं च दुःखं च यत् तत् समं तुल्यं पश्यति, यथा मम सुखदुःखे अनुकूलप्रतिकूले तथा सर्वस्येति तुल्यतया सर्वत्र समं पश्यति, सर्वस्यैव सुखमिष्टं दुःखमनिष्टमिति स्वात्मवज्ज्ञात्वा सर्वभूताहिंसको ज्ञानाभ्यासेन च रागद्वेषादिशून्यः स्वपरदुःखसुखादिषु समदृष्टिर्नतु विषमदृष्टिर्यः स परम उत्कृष्टो योगी मतः सर्वयागिनां मध्ये हे अर्जुन ! तस्मात्परमयोगित्वाय महायत्न आस्थेयः ॥ ३२ ॥

एतादृशं योगमशक्यं मन्यमानस्तदुपायं ध्रुवं जिज्ञासुः श्रद्धावांश्च भगवद्वाक्ये—

अर्जुन उवाच

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥

चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

हे मधुसूदन ! साम्येन समत्वेन रागद्वेषादिनिराकरणेन योऽयं सर्वत्र समदृष्टिलक्षणो योगस्त्वया प्रोक्तः, मनसश्चञ्चलत्वादेतस्य योगस्य स्थिरामचलां दीर्घकालानुवर्तिनीं स्थितिमहं न पश्यामि ॥ ३३ ॥ हे कृष्ण ! हि यस्मात् प्रसिद्धमेतद् यन्मनश्चञ्चलं प्रमाथि प्रमथनशीलं, बलवन्नियन्तुमशक्यं, दृढमच्छेद्यं तस्य मनसो निग्रहं वायोर्निग्रह इवाहं दुष्करं मन्ये, तन्निग्रहं विना च कथं साम्यलक्षणो योगो भवेदिति भावः ॥ ३४ ॥

प्रश्नमभिनन्दन्नुपायमाह—

श्रीभगवानुवाच

असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते ॥ ३५ ॥

हे महाबाहो ! मनो दुर्निग्रहं चलमित्यसंशयम्, यथेन्द्रियाणि गोलकनिमीलनादिना हठेनापि निगृह्यन्ते, तथा मनोनिग्रहो न संभवत्यत्र संशयो नास्ति, तथापि हठेन दुर्निग्रहमपि तदभ्यासेन वैराग्येन च समुचितेन गृह्यते हे कौन्तेय ! तथा च योगसूत्राणि "अभ्यासवैराग्याभ्यां तन्निरोधः । तत्र स्थितौ यत्नोऽभ्यासः । स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिः । दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञावैराग्यम् । तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" ॥ आभ्यां प्राणनिरोधवासनाक्षयौ संपाद्येते, चित्तावस्थाविशेषे विजातीयप्रत्ययानन्तरितसमानप्रत्ययावृत्तिरभ्यासो भवति, वैराग्यं च दृष्टादृष्टविषयेषु दोषदर्शनाभ्यासादिना जायते, अध्यात्मशास्त्रावगमसाधुसङ्गमादयोऽपि चित्तनिरोधसाधनानि भवन्ति,

ज्ञानवैराग्यादिद्वारैवेत्येवं क्रमेण युक्त्या मनो निगृह्यते न हठात् ॥ ३५ ॥

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

अभ्यासवैराग्याभ्यामसंयत आत्माऽन्तःकरणं यस्य तेनासंयतात्मना योगो मनोवृत्तिनिरोधः साम्यदर्शनं दुष्प्रापो दुःखेन प्राप्यः प्राप्तुमशक्योऽस्ति, प्रारब्धादिवशाच्चित्तचाञ्चल्यादिति मे मतिः, वश्यात्मना वशीकृतचित्तेन तूपायतोऽभ्यासवैराग्यरूपाद् भूयोऽपि यतता यतमानसंज्ञादिवैराग्यादिसंपादयता पुरुषेण प्रारब्धादिकमभिभूय योगोऽवाप्तुं शक्य एव ॥ ३६ ॥

योगभ्रष्टस्य स्वर्गमोक्षसाधनसम्पत्तेरभावात्तस्य कीदृशी गतिः स्यादिति पृच्छति—

अर्जुन उवाच

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण! गच्छति ॥ ३७ ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो! विमूढो ब्रह्मणः पथि ॥ ३८ ॥
एतन्मे संशयं कृष्ण! छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥

अयतिरयत्नशीलोऽल्पयत्नो श्रवणादावपि दृढाभ्यासाभावादलब्धात्मानुभवो योगमार्गे च श्रद्धयाऽऽस्तिक्यबुद्ध्या चोपेतो युक्तो विवेकादिसाधनसहितोऽपि मरणकाले प्रथमं वा केनचिन्निमित्तेन योगाच्चलितं मानसं यस्य स योगाच्चलितमानसो भ्रष्टस्मृतिः

पुरुषो योगसंसिद्धिं योगफलं सम्यग्दर्शनं मोक्षञ्चाप्राप्य हे कृष्ण ! कां गतिं गच्छति, कर्मत्यागेन तत्फलासम्भवाद्योगफलाप्राप्तेश्चेति ॥ ३७ ॥ स्वाशयं स्फुटयति, कच्चिदिति प्रश्ने, हे महाबाहो ! ब्रह्मणः पथि ब्रह्ममार्गे ज्ञाने विमूढा विक्षिप्तोऽप्रतिष्ठः कर्ममार्गाश्रयरहितो निराश्रयोऽतएवोभयविभ्रष्टः कर्मणां त्यागात्कर्ममार्गात्सम्यग्दर्शनालाभाच्च योगमार्गाद् भ्रष्टः किं वायुना छिन्नमभ्रमिव नश्यति किम्वाऽधर्मानाचरणान्न नश्यति ॥ ३८ ॥ हे कृष्ण ! एतं मे संशयं त्वमशेषतः समूलं छेत्तुमपनेतुमर्हसि, हि यस्मात्त्वदन्यः कश्चिद्देवो वा ऋषिर्वास्य छेत्ता नाशयिता नोपपद्यते, न सम्भवति तस्मात्सर्वज्ञस्त्वमेव छेत्तुमर्हसि ॥ ३९ ॥

श्रीभगवानुवाच

पार्थ ! नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद् दुर्गतिं तात ! गच्छति ॥ ४० ॥
प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

हे पार्थ ! तस्य योगभ्रष्टस्येहाऽस्मिंल्लोकेऽमुत्र परलोके वा विनाशः पूर्वस्माद्धीनजन्मलाभो नरकप्राप्तिर्वा न विद्यते न भवति, हि यस्मात् कल्याणकृच्छुभकृत्कश्चिदपि दुर्गतिं न गच्छति हे तात ! तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते, पितैव पुत्ररूपेणोत्पद्यत इति पुत्रोपि तात उच्यते शिष्योपि पुत्रतुल्यत्वात् । नेहाभिक्रमनाशोस्ति इत्यादिनोक्तश्च नाशाभावः ॥ ४० ॥ दुर्गत्यभावमुक्त्वा सुगतिमाह प्राप्येति योगमार्गे प्रवृत्तस्तस्माद् भ्रष्टो योग-

भ्रष्टः पुण्यकृतां यज्ञादिकर्तॄणां लोकान् प्राप्य तत्र च शाश्वतीः समा नित्यानसंख्यातान् वत्सरानुषित्वा वासमनुभूय तद्भोगक्षये शुचीनां शुद्धानां श्रीमतां गेहेऽभिजायते, गर्वादिदोषरहिते श्रेष्ठकुले स उत्पद्यते भोगवासनाशेषात् ॥ ४१ ॥ वैराग्याधिक्ये पक्षान्तरमाह—अथवेति धीमतां विवेकिनां ब्रह्मविद्यावतां योगिनां भक्त्यादियोगवतां दरिद्राणामेव कुले गेहे जन्म भवति, एतद्दरिद्रयोगिकुले जन्म हि यत् तदीदृशं जन्म लोके पूर्वापेक्षया दुर्लभतरं ज्ञेयम् ॥ ४२ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ! ॥ ४३ ॥

एतादृशस्य जन्मनो दुर्लभत्वं कस्माद्यस्मात्तत्र योगिकुले पौर्वदेहिकम्, पूर्वदेहे भवं बुद्धिसंयोगं बुद्ध्या शुद्धया सम्बन्धं लभते, ततस्तस्मात्पूर्वकृतादभ्याससंस्काराद् भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं मोक्षार्थं यतते, तत्त्वसाक्षात्कारं संपादयति, रागादिप्रतिबन्धकाभावात्कुलादिमाहात्म्येन हे कुरुनन्दन ! ॥ ४३ ॥

कथंभूतं बुद्धिसंयोगं लभत इत्यपेक्षायां तेनैव पूर्वाभ्यासेनावशस्यापि योगभ्रष्टस्य बुद्धिं प्रत्येवाहरणरूपमित्याह—

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

यः पूर्वजन्मनि कृतोऽभ्यासस्तेनैव बलवता पूर्वाभ्यासेन हि यस्मादवशः पित्राद्यधीनोऽपि स योगभ्रष्टो ह्रियते स्ववशीक्रियते, योगाभ्याससंस्काराद्बलवत्तरस्याधर्मस्य प्रतिबन्धकस्याभावात् , प्रतिबन्धके सत्यपि तत्क्षये सति योगजः संस्कारः स्वयमेव कालान्तरे कार्यमारभते, न दीर्घकालस्थस्यापि तस्य विनाशोऽस्तीत्यर्थः, एत-

देव कैमुत्येन द्रढयति योगस्य जिज्ञासुर्योगस्वरूपं ज्ञातुमिच्छन् योगमार्गे प्रवृत्तोऽपि शब्दब्रह्म कर्मकाण्डवेदं वेदोक्तकर्मानुष्ठानफलमतिवर्तते विमुञ्चति, किमुत यो योगं बुद्ध्वा तन्निष्ठोऽभ्यासी, एतेन श्रीमतां कुले जातस्यापि शब्दब्रह्मातिवर्तनं सिद्धम् । तदतिवर्तनं च ततोऽधिकफलावाप्तिर्विवक्षिता ॥ ४४ ॥

इतश्च योगित्वं श्रेय इत्याह—

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

प्रयत्नादधिकयत्नात्प्रकर्षेण यत्नेन यतमानो योगी विद्वान् संशुद्धकिल्बिषः संशुद्धपापोऽनेकजन्मसंसिद्धोऽनेकेषु जन्मसु किञ्चित्किञ्चित्संस्कारजातमुपचित्य तेनोपचितेन संसिद्धस्ततः प्राप्ततत्त्वानुभवः सन् परां गतिं मुक्तिं याति ॥ ४५ ॥



योगस्यावश्यं सम्पादनार्थमाह—यस्मादेवं तस्मात्—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ! ॥४६॥

तपस्विभ्यो व्रतादिकृद्भ्यः, ज्ञानिभ्यः शास्त्रज्ञेभ्यः, कर्मिभ्योऽग्निहोत्रादिकृद्भ्यो योगी ध्यानी मुमुक्षुरधिकः श्रेष्ठस्तस्माद् योगी भव हे अर्जुन ! कर्मयोगं कृत्वा शुद्धान्तःकरणः सन् ध्यानयोगयुक्त आत्मानुभवी भव ॥ ४६ ॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे-आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥६॥

यः श्रद्धावान् मद्‌गतेनान्तरात्मना सर्वेश्वरे मयि स्थापितेन चेतसा मां सर्वेश्वरं भजते, स सर्वेषां योगिनामपि मध्ये युक्ततमः सर्वोत्तमो ध्यानयोगी मे मम मतोऽभिप्रेतोऽतस्त्वं ध्यानयोगी भवेति भावः ॥ ४७ ॥

आसनादिविधानेन ध्यानाभ्यासरसेन च ।
आत्मनि मनसः सम्यक् संयमो योग उत्तमः ॥ १ ॥
परं वैराग्यमाश्रित्य ध्यानयोगाश्रितो मुनिः ।
आत्मानं परमां शान्तिं याति सर्वत्र पश्यति ॥ २ ॥
मनसः संयमात्सम्यगात्मनि ध्यानयोगतः ।
आत्मसंयमयोगोऽसौ भवेद्धरेरनुग्रहात् ॥ ३ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां षष्ठोऽध्यायः ॥ ६ ॥

# सप्तमोऽध्यायः ( ७ )

योगिध्येयं परं सत्यं विशुद्धं ज्ञेयमाश्रये ।
यस्यैवाश्रयणाज्जीवो न पुनर्भवभाग् भवेत् ॥ १ ॥

त्वं पदार्थं निरूप्य तत्पदार्थं निरूपयितुं पूर्वाध्यायान्ते योगिनामपि सर्वेषामित्युपक्रान्तं, तत्रेदृशं मदीयं तत्त्वं वर्ततेऽनेन प्रकारेण मद्गतान्तरात्मा स्यादित्येतद्वक्तुमिच्छुः स्वयम्—

श्रीभगवानुवाच

मय्यासक्तमनाः पार्थ ! योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

हे पार्थ ! मयि परमेश्वरे वक्ष्यमाणविशेषणे, आसक्तं मनो यस्य स आसक्तमनाः, अहमेवाश्रयो यस्य स मदाश्रयो मदैकशरणः सन् योगं युञ्जन् मनःसमाधानं कुर्वन् असंशयं यथा स्यात्तथा समग्रं विभूत्यादिसहितं मामीश्वरं यथा येन प्रकारेण ज्ञास्यसि तत्प्रकारं शृणु ॥ १ ॥

ज्ञास्यसीत्युक्तं ज्ञानं स्तौति—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

तदिदं ज्ञानं शास्त्रजन्यं मद्विषयकं विज्ञानेनापरोक्षानुभवेन सहितं सविज्ञानं ते तुभ्यमहमशेषतः कार्त्स्न्येन वक्ष्यामि कथयिष्यामि, यन्मद्विषयं ज्ञानं ज्ञात्वा लब्ध्वा स्थितस्य भूयः पुनरिह ज्ञातव्यमन्यन्न शिष्यते, सविज्ञानमद्विषयज्ञानज्ञानेन सर्वज्ञत्वसिद्धेः, "येनाश्रुतं श्रुतं भवती"त्यादि श्रुतेरिति भावः ॥ २ ॥

सर्वज्ञत्वसम्पादकं तज्ज्ञानं दुर्लभमित्याह—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

मनुष्याणां मध्ये सहस्रेष्वसंख्येष्वनेकेषु कश्चिदेव सिद्धये तत्त्वज्ञानार्थं सत्त्वशुद्धये यतति यत्नं करोति तथा श्रवणादि करोति । यततामपि सिद्धानां मुमुक्षूणां शुद्धसत्त्वानां मध्ये कश्चिन्मामीश्वरं तत्त्वतो वेत्ति ॥ ३ ॥

श्रोतारं प्ररोचनेनाभिमुखीकृत्याह—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ! ययेदं धार्यते जगत् ॥ ५ ॥

भूमिरित्यादिशब्दैः पञ्चतन्मात्राणि महाभूतसूक्ष्मावस्थारूपाणि लक्ष्यन्ते, मनःशब्देन तत्कारणमहङ्कारः, बुद्धिशब्देन महत्तत्त्वमहङ्कार इत्यनेनाऽविद्यासंमिश्रमव्यक्तं लक्ष्यते, प्रकृतिप्रकरणात्, कारणे सर्वत्र कार्यशब्दानामुपचारो विषसंमिश्रेऽन्ने विषशब्दवद् बोध्यः । इतीयं यथोक्ता ममेश्वरस्य प्रकृतिर्मायाशक्तिरष्टधाऽष्टभिः प्रकारैर्भिन्ना भेदं गता ॥ ४ ॥ अचेतनवर्गस्य प्रकृतेः परिणामत्वमभिधाय सानुवादं परां प्रकृतिमाह—इयं पूर्वोक्ताऽष्टप्रकारा प्रकृतिरपरा निकृष्टाऽशुद्धत्वादनर्थकरत्वात् संसारबन्धनात्मकत्वाच्च, इतोऽस्या अन्यां तु परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां मे ममात्मभूतां प्रकृतिं विद्धि, हे महाबाहो ! यया जगदन्तः प्रवृष्टया जगदिदं धार्यते, न हि जीवेन विना किञ्चिद्धारयितुं शक्यमस्तीति ॥ ५ ॥

उक्तप्रकृत्योः प्रकृतित्वं दर्शयन् स्वस्य तद्द्वारा सृष्ट्यादिकारणत्वमाह—

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

एते परापरे प्रकृती योनी कारणे येषां तान्येतद्योनीनि सर्वाणि भूतानीत्युपधारय जानीहि, यस्माच्च मम प्रकृती योनी तस्मात्तद्द्वाराऽहं सर्वस्य जगतः प्रभव उत्पत्तिः तथा प्रलयो नाशश्चास्मि, उत्पत्तिविनाशकारणमस्मीत्यर्थः सर्वज्ञ ईश्वरः प्रकृतिद्वारैव कारणं भवतीति भावः ॥ ६ ॥

यस्मादेवं सर्वस्याहमेव कारणं तस्मात्—

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ! ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

मत्तः सर्वात्मभूतात् परमेश्वरात् परतरं श्रेष्ठमन्यत् कारणान्तरं किञ्चिदपि नास्ति नैव विद्यते, हे धनञ्जय ! अहमेव सर्वस्मात्परं कारणमस्मि, यत एवं तस्मान्मयि परमेश्वरे सर्वमिदं जगत्सूत्रे मणिगणा इव प्रोतमस्ति ग्रथितं वर्ततेऽनेन सर्वस्य स्थितिहेतुत्वमपि दर्शितम्, "यस्मात्परं नापरमस्ति किञ्चित्" इत्यादिश्रुतिश्च द्रष्टव्या ॥ ७ ॥

अबादीनां रसादिषु प्रोतत्वप्रतीतेराह—

रसोऽहमप्सु कौन्तेय ! प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

अपां यः सारः पुण्यो रसस्तस्मिन् रसभूते मयि सर्वा आपः प्रोताः सन्ति, एवं सर्वत्र बोध्यम् । तस्मादहमप्सु सारभूतो रसोऽस्मि, शशिसूर्ययोरेवं प्रभास्मि, सर्ववेदेषु सारभूतः प्रणव ओंकारो-

ऽस्मि तस्मिन् वेदाः प्रोताः सन्ति, तथा खे-आकाशे सारभूतः शब्दोऽस्मि, नृषु पुरुषेषु पौरुषं पुरुषस्य भावो यतः पुंबुद्धिर्भवति तत्पुरुषत्वसामान्यमहमस्मि ॥ ८ ॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

पुण्योऽविकृतो गन्धः सुरभिश्चाहं पृथिव्यामस्मि पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थम्, अपुण्यत्वं तु गन्धादीनां संसारिणामविद्याऽधर्माद्यपेक्षं भूतसंसर्गविशेषनिमित्तं भवति, तेजो दीप्तिश्च विभावसावग्नावस्मि चकारात् पुण्यः स्पर्शोऽहमस्मि, सर्वभूतेषु जीवनमायुरन्नं चाहमस्मि, तपस्विषु तपश्चाहमेवास्मि ॥ ९ ॥

बीजं मां सर्वभूतानां विद्धि पार्थ ! सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥
बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ! ॥ ११ ॥

हे पार्थ ! सनातनं चिरन्तनं नित्यं बीजान्तरादनुत्पन्नं सर्वभूतानां बीजं कारणमव्याकृत मामीश्वरं मदभिन्नं विद्धि, किञ्च बुद्धिमतां विवेकशक्तिमतां बुद्धिश्चैतन्याभिव्यञ्जकशक्तिरन्तःकरणस्य विवेकशक्तिरहमेवास्मि, तथा तेजस्विनां तेजः प्रागल्भ्यं प्रभावोऽहमस्मि ॥ १० ॥ सात्त्विकबलवतां बलं सामर्थ्यमोजोऽस्मि । तच्च कामरागविवर्जितमेव देहादिधारणमात्रार्थं बलं तदेवाहमस्मि, न तु तृष्णारागकारणभूतम्, एवं धर्माविरुद्धः शास्त्राविरुद्धो देहादिधारणमात्रार्थः कामो भूतेषु हे भरतर्षभ ! अह-

स्मि । तृष्णासक्तिरूपकामरागादिजन्यबलकामादिकमविद्यामयमेवेति भावः ॥ ११ ॥

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

सात्त्विकाः सत्त्वोद्भूता भावाः पदार्थाः शमदमादयोऽन्ये वा जडाः । एवं राजसा भावा हर्षदर्पादयोऽन्ये वा, तामसाः शोकमोहादयोऽन्ये च, ये केचित् प्राणिनां स्वकर्मवशाज्जायन्ते मायाऽविद्यामयास्तान् मत्त एव जातान् विद्धि तेषां जडत्वात्सत्तास्फूर्तिश्च मदात्मिकैव तेषु विद्यत इति, तेषां मत्तो जातत्वेऽपि तेषु तदधीनोऽहं नास्मि, ते तु मयि मदधीनाः सन्ति, मयि सच्चिदानन्दे कल्पितत्वात्, अज्ञानात्संसारिणस्तदधीना भवन्ति न सर्वज्ञ ईश्वर इति भावः ॥ १२ ॥

एवं भूतं सर्वात्मानमीश्वरं जनः कस्मान्न जानाति येन तदधीनो भवतीति चेदाह—

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

एभिः पूर्वोक्तैस्त्रिभिस्त्रिप्रकारैर्गुणमयैर्गुणविकारैर्भावै रागद्वेषमोहादिप्रकारैः पदार्थैः, मोहितमविवेकतामापादितं मूढं जातमिदं सर्वं जगत् प्राणिजातमेभ्यो गुणेभ्यः परं भिन्नमत्यन्तविलक्षणं सर्वसाक्षिणमत एवाव्ययं व्ययरहितं जन्मादिसर्वविकारशून्यं मां नाभिजानाति ॥ १३ ॥

कथं पुनरेतां गुणात्मिकां मायां तरतीति चेदाह—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

"एको देवः सर्वभूतेषु गूढः" इति श्रुतिप्रोक्तदेवस्येयं दैवी "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतिरीत्या महेश्वरस्य मम स्वभूता गुणमयी त्रिगुणात्मिका माया प्रकृतिर्दुरत्यया दुरतिक्रमाऽस्ति सर्वैः ये तु सर्वात्मना मां सर्वात्मानं साक्षिभूतमेव प्रपद्यन्ते प्रपन्ना भवन्ति, मायाविनमीश्वरं भजन्ति जानन्ति विवेकेन शुद्धस्वरूपं स्वात्मत्वेनाश्रयन्ति ते मत्प्रसादलब्धापरोक्षबुद्धियोगा एतां विमोहिनीमीश्वरशक्त्यंशभूतामविद्यां तरन्ति तामतिक्रामन्ति संसारबन्धनान्मुच्यन्त इत्यर्थः। "ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति" (देवीभागवते)। "ये प्रपन्ना हृषीकेशं न ते मुह्यन्ति मानवाः। भये महति मग्नानां त्राता नित्यं जनार्दनः"। (महाभारते) ॥१४॥

यद्येवं तर्हि कस्मात्सर्वे त्वामेव न प्रपद्यन्त इत्याशङ्कायामाह—

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

अनादिभ्रमादिरूपया माययाऽपहृतं विवेकज्ञानमाच्छादिता ज्ञानशक्तिर्येषां तेऽपहृतज्ञाना अत एवासुरं भावं दम्भदर्पादिलक्षणं हिंसानृतादिकमाश्रिताः प्राप्तास्तस्माच्च दुष्कृतिनः पापकारिणोऽत एव मूढा मोहं प्राप्ता विवेकशून्या अत एव नराणां मध्येऽधमा निकृष्टास्ते मां परमेश्वरं न प्रपद्यन्ते न भजन्ते ॥ १५ ॥

के पुनस्त्वां प्रपद्यन्त इत्यपेक्षायामाह—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ! ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ॥ १६ ॥

हे अर्जुन ! चतुर्विधाः सुकृतिनः पुण्यकर्माणो जना नरोत्तमा एव मां भजन्ते, हे भरतर्षभ ! ते चतुःप्रकाराश्चैते सन्ति, आर्त्तो

रोगादिजनितपीडायुक्तो, जिज्ञासुरात्मज्ञानार्थी भगवत्तत्त्वज्ञानेच्छुः, अर्थार्थी धनादिकामः, ज्ञानी परमतत्त्वज्ञः ॥ १६ ॥

सर्वेषां सुकृतित्वेऽपि ज्ञानिनः श्रैष्ठ्यमाह—

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

तेषां चतुर्णां मध्ये तत्त्वविद्त्वान्नित्ययुक्तः प्रत्यगभिन्नपरतत्त्वे सदा समाहितचेता एकभक्तिरेकमेवाद्वितीयं ब्रह्मेति निश्चयादेकस्मिन् भक्तिर्निरतिशया प्रीतिर्यस्य स एकभक्तिर्ज्ञानी भवत्यन्यस्य भजनीयस्यादर्शनात् सोऽन्येभ्यो विशिष्यते सर्वतोऽतिरिच्यते, हि यस्मादहं ज्ञानिनोऽत्यर्थमत्यन्तं प्रियोऽस्मि तस्यात्मत्वात् , स च ममात्मत्वान्मम प्रियोऽस्ति ॥ १७ ॥

तर्हि किमार्त्तादयस्तवाप्रिया नेत्याह—

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥

सर्वेऽप्येते आर्त्तादय उदारा उत्कृष्टाः पुण्यशालिन एवान्यथा मम भजनाऽसम्भवात् , अत एव मम प्रिया एव ज्ञानी त्वत्यन्तं प्रिय इति विशेषः, यस्माज्ज्ञानी ममात्मैव नान्यो मत्त इति मे मतं निश्चयः, "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतेः हि यस्माच्च युक्तात्मा सदा समाहितचित्तः स ज्ञानी मामेव सच्चिदानन्दमनुत्तमां सर्वोत्कृष्टां गतिं गन्तव्यं परमं फलमास्थितो गन्तुं प्रवृत्तो नान्यं पदार्थमिति आर्त्तादयस्तु मत्तोऽन्यमपि गन्तुमास्थिताः सकामास्त इतिभावः ॥ १८ ॥

ज्ञानी परमदुर्लभ इति पुनरपि तं स्तौति—

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

ज्ञानार्थपुण्यसंस्कारार्जनाश्रयाणां बहूनां जन्मनामन्ते सर्वपुण्यविपाकरूपे चरमजन्मनि सर्वजन्मसमाप्तौ "सर्वं खल्विदं ब्रह्म" त्यादि श्रुत्यनुसारेण वसति सर्वत्राधिष्ठानाधाररूपेणेति वासुः स चासौ देवश्च वासुदेवः सर्वमिति ज्ञानवान् सन् यो मां वासुदेवं प्रत्यगात्मानं प्रपद्यते प्रत्यक्षं जानाति सर्वदा सर्वभावेन भजते स महात्मा सर्वोत्कृष्टोऽतो दुर्लभो मनुष्याणां सहस्रेष्वित्यादिह्युक्तम्। यो ज्ञानवान् मां वासुदेवः सर्वमिति प्रतिपद्यते स इति सम्बन्धः॥१९॥

वासुदेवः सर्वमात्मैव सर्वमित्येवं साक्षात्परंपरया वाऽप्रतिपत्तौ कारणमाह, यथाकथञ्चिदपि स्वाभिमुखानामुदारतासूचनाय—

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

पुत्रपशुस्वर्गादिविषयैस्तैस्तैः कामैरभिलाषैरपहृतं नष्टमाच्छादितमात्मविमुखीकृतमन्तःकरणं विवेकज्ञानं येषां तेऽपहृतज्ञानाः स्वया स्वकीयया प्रकृत्या स्वभावेन संस्कारविशेषेण नियता नियमिता वशीकृताः सन्तस्तं तं जपोपवासादिरूपं नियममास्थायाऽऽश्रित्य वासुदेवादन्यदेवताः प्रपद्यन्ते प्राप्नुवन्ति भजन्ते ॥ २० ॥

ननु तेषामपि देवतानुग्रहाद्विवेकस्त्वयि भक्तिश्च भविष्यतीति चेत्तत्राह—

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥

यो यो कामी यां यां देवतातनुं श्रद्धया युक्तो भक्तः सन्नर्चितुं पूजयितुमिच्छति, तस्य तस्य कामिनस्तामेव श्रद्धामहमचलां स्थिरां

विदधामि करोमि यया युक्तः सोऽर्चितुमिच्छति न तु मद्विषयां श्रद्धां करोमि तामेव तनुं प्रति श्रद्धां विदधामीति वाऽध्याहारेण संबन्धः ॥ २१ ॥ यो यां देवतातनुमर्चितुमिच्छति स तया मद्विहितयाऽचलया श्रद्धया युक्तः तस्या देवतातन्वाराधनमाराधनमर्चनमीहते चेष्टते करोति, ततो देवतातन्वाः सकाशान्मयैवेश्वरेण विहितान् निर्मितान् तान् कामानवश्यं लभते हि यस्मादीश्वरविहितास्ते कामा भोगाः सन्ति ॥ २२ ॥

समानेऽप्यायासेऽल्पबुद्धित्वान्महत्फलामुपासनां हित्वाल्पफलां करोतीत्याह—

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

तेषां तत्तद्देवताराधकानामल्पमेधसां "अथ यत्रान्यत्पश्यत्यन्यच्छृणोति तदल्पम्" इति श्रुतेरल्पे द्वैते मेधा येषामल्पा मेधा बुद्धिर्वा येषां परिच्छिन्नबाह्यार्थाभिलाषिणां तेषां तन्मद्विहितमपि कर्मजं फलमन्तवद् विनश्वरं भवति, यतो देवयज्ञो देवोपासका अन्तवतो देवान् यान्ति गच्छन्ति मद्भक्तास्त्वार्त्तादयश्चयः सकामास्तत्तदीप्सितं लब्ध्वा क्रमेण मामनन्तं परमात्मानं मोक्षमपि यान्ति प्राप्नुवन्ति तस्मात्सकामत्वेऽपि महदन्तरं वर्तत्तेऽत उक्तमुदाराः सर्व एवैते इति ॥ २३ ॥

एवं समाने प्रयासे महति फलभेदे किमिति सर्वे त्वामेव न भजन्तीति चेदाह—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

ममाव्ययं नित्यमनुत्तमं निरतिशयं शुद्धं परमुत्कृष्टं भावं

स्वरूपं सगुणं निर्गुणं वाऽजानन्तोऽत एवाबुद्धयोऽव्यक्तं शरीरग्रहणात्पूर्वमप्रकाशमिदानीं व्यक्तिमापन्नं प्रकाशमागतं मां मन्यन्ते, तेनाविविक्तिनो नित्यं सन्तमीश्वरं पूर्वमसन्तमधुनैवावतारकाले तत्तदवतारादिरूपेण मन्यन्तेऽतो मत्स्वरूपाज्ञानान्न मां भजन्तीति भावः ॥ २४ ॥

स्वाज्ञाने निमित्तमाह—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

अहं परमेश्वरः सर्वस्य लोकस्य स्वेनेश्वरेण रूपेण प्रकाशः प्रकटो न भवामि, किन्तु केषाञ्चिद्भक्तानामेव प्रकाशो भवामि, तत्र हेतुमाह योगेति गुणानां युक्तिर्घटनं योगः सैव माया यद्वा भगवतः समाधिः संकल्पो योगस्तत्कृता तदधीना माया योगमाया तया समावृतः संछन्नोऽस्म्यतोऽयं मूढो लोको मद्विमुखः सन् स्वस्वरूपभूतं मामजमव्ययं न जानाति ॥ २५ ॥

मायासमावृतश्चेल्लोकवत् त्वामपि सा स्ववशमज्ञं कुर्यादेव, लोकस्येव तव ज्ञानप्रतिबन्धः स्यादेवेत्याशङ्क्याह—

वेदाहं समतीतानि वर्तमानानि चार्जुन ! ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥

मायाविवन्मदाश्रया माया मज्ज्ञानप्रतिबन्धं नैव करोति मदधीनत्वाच्च मायायास्तस्मादहं समतीतानि समतिक्रान्तानि भूतानि वेद जानामि तथा वर्तमानानि भविष्याणि चाहं सर्वज्ञोऽप्रतिहतज्ञानो वेद हे अर्जुन ! मां तु मद्भक्तादन्यः कश्चन न वेद न जानाति तस्मान्न भजत इति ॥ २६ ॥

भगवत्तत्त्वाज्ञाने निमित्तं योगमायामुक्त्वा निमित्तान्तरमाह—

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ! ।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ! ॥ २७ ॥

इच्छाद्वेषाभ्यां रागद्वेषाभ्यां समुत्थो जात इच्छाद्वेषसमुत्थस्तेन द्वन्द्वमोहेन शीतोष्णसुखदुःखादिद्वन्द्वनिमित्तेन मोहेन चित्तव्याकुलतापादकेन मिथ्याज्ञानेन सर्वभूतानि सर्गे जन्मकाले प्राप्ते सम्मोहमतिमूढतां यान्ति गच्छन्ति हे भारत ! इच्छाद्वेषाभिभूतस्य च मूढस्य बाह्यार्थविषयमपि ज्ञानं यथाविषयं नोत्पद्यते किमु वक्तव्यं प्रत्यगात्मविषयं नोत्पद्यत इत्यत्र हे परन्तप ! ॥ २७ ॥

के पुनस्त्वां विदित्वा भजन्त इत्यपेक्षायामाह—

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

येषां तु पुनः पुण्यकर्मणां सुकृतिनां पुण्यं कर्म चित्तशोधकं येषां तेषां पुण्यकर्मणां जनानां पापमन्तगतं समाप्तप्रायं क्षीणं ते द्वन्द्वमोहेन निर्मुक्ता द्वन्द्वमोहनिर्मुक्ता दृढव्रता एवमेव परमार्थतत्त्वं नान्यथेति निश्चितविज्ञाना दृढविश्वासभक्तिमन्तः सन्तो मां भजन्ते परमात्मानं सेवन्ते, ते चतुर्विधा भजन्त इत्यत्र सुकृतिशब्देनोक्ताः ॥ २८ ॥

किमर्थं भजन्त इत्युच्यते—

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

जरामरणयोः मोक्षाय निवृत्तये मां सगुणमीश्वरमाश्रित्य शरणागतो भूत्वा ये निष्पापा दृढव्रता यतन्ति मदर्पितानि कर्माणि

ध्यानादिकञ्च कुर्वन्ति ते यत्परं ब्रह्म तद्विदुः कृत्स्नमध्यात्मं प्रत्यगात्मविषयं वस्तु विदुः कर्म च वक्ष्यमाणं विदुस्तथाऽखिलं प्रपञ्चं विदुः समस्तं कर्म वा विदुः ॥ २९ ॥

तेषां मरणकालेऽपि मद्विस्मृतिर्न भवतीत्याह—

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

अधिभूतञ्चाधिदैवञ्चाधिभूताधिदैवं तेन सह साधिभूताधिदैवं तथा साधियज्ञं च ये मां विदुस्ते युक्तचेतसः समाहितचित्ता मरणकालेऽपि मां विदुरतस्तेषां मोक्षप्राप्तौ न कोऽपि संदेह इति ॥३०॥

सामान्येन भवेज्ज्ञानं विज्ञानं तु विशेषतः ।
ताभ्यां चित्तस्य सल्लक्ष्ये योगो भवति सर्वथा ॥ १ ॥
उत्तमो योऽधिकारी स्यात्तस्मै ज्ञेयं हि निर्गुणम् ।
प्रोक्तं लक्षणया त्वत्र ध्येयमन्यार्थमुक्तवान् ॥ २ ॥
ज्ञानविज्ञाननामानौ योगौ योगस्य साधकौ ।
निर्बीजस्य विशुद्धस्य भवतस्तावुक्तवान् हरिः ॥ ३ ॥
सर्वात्मत्वेन चात्मानं सगुणं परमेश्वरम् ।
उपास्यमुक्तवान् ज्ञेयं निर्गुणं प्रोक्तवांस्तथा ॥ ४ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां सप्तमोऽध्यायः ॥ ७ ॥

---

# अष्टमोऽध्यायः ( ८ )

पूर्वाध्यायान्ते, ते ब्रह्म तद्विदुरित्यादि प्रश्नविषयं श्रुत्वाऽर्जुनः पृच्छति—

अर्जुन उवाच

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ! ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ! ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

हे मधुसूदन ! तत्र ज्ञेयत्वेनोक्तं ब्रह्म किं सगुणं निर्गुणं वा, अध्यात्मं किमात्मानं देहमधिकृत्य वर्तमानमिन्द्रियादिकं तत्प्रत्यगात्मा वा, कर्म किं लौकिकं वैदिकं वा "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति श्रुतावपि द्वैविध्यश्रुतेः, अधिभूतं भूतेष्वाकाशादिषु वर्तमानं किञ्चिदुक्तं समस्तं कार्यं वा, अधिदैवं देवविषयध्यानादि तत्र वर्तमानं चैतन्यं वा किमुच्यते ॥ १ ॥ अधियज्ञो यज्ञमधिगतः कथं कोऽत्र विज्ञानात्मा परमात्मा वा स च कथं केन प्रकारेण चिन्तनीयः, सोऽप्यत्र देहे वर्तते बहिर्वा, देहेऽपि कोऽस्ति, हे मधुसूदन ! प्रयाणकाले च नियतात्मभिः कथं ज्ञेयोऽसि ॥ २ ॥

प्रश्नक्रमेणोत्तरं ददाति प्रश्नकर्तुः सुखाधिगमाय—

श्रीभगवानुवाच

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

"एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि शास्त्रसिद्धमक्षरमविनाशि परमं स्वप्रकाशं परमानन्दमोंकारवर्णादिभिन्नं यत्तद् ब्रह्म निर्गुणमस्ति ज्ञेयम्। तस्यैव स्वो भावः स्वभावः प्रत्यक्चैतन्यमात्मानं देहमधिकृत्य भोक्तृतया वर्तमानमध्यात्ममुच्यते प्रतिदेहं ब्रह्मणः स्वभावोऽसौ, भूतानां भवनधर्मकाणां देहादीनां भावमुत्पत्तिमुद्भवं वृद्धिं च करोतीति भूतभावोद्भवकरो विसर्गस्त्यागो देवाद्युद्देशेन चरुपुरोडाशादिद्रव्यस्य कर्मसंज्ञितो भवति कर्मसंज्ञक इत्यर्थः, अथवा भूतानां भावस्य वस्तुनः स्वभावस्य वोद्भवकर इत्याद्यर्थः ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ! ॥ ४ ॥

क्षरो भावः विनाशी पदार्थो यत्किञ्चिज्जन्मवान् तदधिभूतं प्राणिजातमधिकृत्य भवतीति तथोच्यते, पुरुषः पूर्णमनेन सर्वमिति सर्वासु पूर्षु शयनाद्वा हिरण्यगर्भः सर्वप्राणिकरणानुग्राहकः "स वै शरीरी प्रथमः स वै पुरुष उच्यते" इत्यादिसूक्तो यः सोऽधिदैवतं यस्मात्स एव दैवतान्यादित्यादीन्यधिकृत्य प्राणिकरणमनुगृह्णाति, अधियज्ञो यज्ञाभिमानिनी देवता विष्णुनाम्नी, "यज्ञो वै विष्णुः" इति श्रुतेः, सोऽत्र देहेऽहमेव मनुष्यदेहे यज्ञस्यावस्थानम्, यज्ञस्य मनुष्यदेहनिर्वर्त्यत्वात् "पुरुषो वै यज्ञः" इत्यादि श्रुतेश्च हे देहभृतां वर ! ॥ ४ ॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

अन्तकाले मरणकाले च मामेव परमेश्वरं विष्णुं स्मरन् सदा

चिन्तयन् कलेवरं शरीरं मुक्त्वा देहाभिमानं त्यक्त्वा यः प्रयाति गच्छति स मद्भावं वैष्णवं तत्त्वं याति प्राप्नोति, अत्रार्थे संशयो नास्ति, सगुणचिन्तकः क्रमेण निर्गुणचिन्तकः साक्षाद् ब्रह्म प्राप्नोत्येव, मामेवेत्यत्रैवकारेणाध्यात्मादिविशिष्टत्वेन स्मरणं वारयति विशिष्टस्मरणे विक्षेपापत्तेः, चकारोऽप्यर्थः ॥ ५ ॥

यं यं वापि स्मरन्भावं त्यजन्त्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय ! सदा तद्भावभावितः ॥ ६ ॥

हे कौन्तेय ! अन्तकाले मां स्मरन् मामेवैतीति नैतावानेव नियमः किन्तु यं यं वापि भावं देवतादिविशेषं स्मरन्नन्ते कलेवरं त्यजति, तं तमेव स्मृतं भावमेति नान्यं, यतः सदा सर्वदा तद्भावभावितः, तस्मिन् देवताविशेषादौ भावो भावना वासना स भावितः संपादितोऽभ्यस्तो वा येन स तद्भावभावितः सन् तद्भावेन तच्चिन्तनेन भावितो वासितचित्तः सन् वा तमेतीति ॥ ६ ॥

यस्मादेवं सदाऽभ्यस्ता वासनैव देहान्तरादिप्राप्तौ कारणम्—

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥

तस्माद्धेतोः सर्वेषु कालेषु सर्वेश्वरं मां यथाशास्त्रं स्मर युध्य च युध्यस्व स्वधर्मं युद्धं च कुरु "न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम्" इति विष्णुपुराणे निजधर्मतोऽचलनमुक्तं मयि वासुदेवेऽर्पिते मनोबुद्धी यस्य स त्वं मय्यर्पितमनोबुद्धिः सन् मामेव यथास्मृतमेष्यस्यत्र संशयो नास्ति, अत्रोपासनाकर्मसमुच्चयो बोधितः ॥ ७ ॥

प्रश्नोत्तरमुक्त्वा प्रयाणकाले भगवदनुस्मरणस्य फलं विवरीतुमारभते—

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

हे पार्थ ! चित्तादिसमर्पणविषयभूते मयि निरन्तरप्रत्ययावृत्तिरेवाऽभ्यासः स एव योगस्तेन युक्तं तत्रैव व्यापृतं यद्योगिनश्चित्तं तेनाभ्यासयोगयुक्तेन चेतसा नान्यगामिना नान्यत्र विषये गन्तुं शीलमस्य तेन परमं निरतिशयं दिव्यं दिवि सूर्ये भवं पुरुषमनुचिन्तयन् ध्यायन् तं याति ॥ ८ ॥

किंविशिष्टं पुरुषं यातीत्युच्यते—

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥
प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

कविं क्रान्तदर्शिनं सर्वज्ञं पुराणमनादित्वाच्चिरन्तनम्, अनुशासितारं जगतः प्रशासितारं नियन्तारमन्तर्यामिरूपेण, अणोः सूक्ष्मादाकाशादेरप्यणीयांसं सूक्ष्मतरम्, सर्वस्य कर्मफलजातस्य धातारं विधातारं विचित्रतया प्राणिभ्यो विभक्तारम्, अचिन्त्यरूपं नाऽस्यरूपं विद्यमानमपि चिन्तयितुं शक्यते तस्मादचिन्त्यं रूपं यस्य, आदित्यवर्णमादित्यस्येव नित्यचैतन्यस्वप्रकाशो वर्णो यस्य तं तमसः परस्तादज्ञानलक्षणान्मोहान्धकारात्परं योऽनुस्मरेत्स तमनुयातीति पूर्वेण संबन्धः ॥ ९ ॥ एवं चिन्तनाभ्यासी प्रयाणकाले मरणकाले भक्त्या प्रेम्णा भजनेन युक्तो योगबलेन समाधिजसंस्कारजनितचि-

त्स्थैर्येण च युक्तः भजनसमाधिजसंस्कारसहितो यो हृदयपुण्डरीके प्रथमं चित्तं वशीकृत्य तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वाऽचलेन मनसा तं पुरुषं स्मरेत् स सम्यगप्रमत्तः सन् तं दिव्यं परं पुरुषमुपैति, यद्वा—अचलेन मनसा या भक्तिस्तया भक्त्या युक्तो यः स तमुपैति ॥ १० ॥

केवलादभ्यासयोगादन्तरङ्गं प्रणवाधारमभ्यासं विधातुं प्रतिजानीते—

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥

यदक्षरमविनाशि तत्त्वं वेदविदो वेदज्ञा वदन्ति "तद्वा एतदक्षरं गार्गि ! ब्राह्मणा अभिवदन्ति" इत्यादिश्रुतेः, यतयो यत्नशीला वीतरागा ज्ञानप्राप्तौ सत्यां यद् विशन्ति प्रविशन्ति, यज्ज्ञातुमिच्छन्तो गुरौ ब्रह्मचर्यं चरन्ति तत्पदं पदनीयमक्षरं ते तुभ्यं संग्रहेण संक्षेपेण वक्ष्ये कथयिष्यामि ॥ ११ ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥

सर्वाणि ज्ञानेन्द्रियद्वाराणि संयम्य प्रत्याहृत्य मनश्च हृदि निरुध्य निष्प्रचारं कृत्वा, आत्मनः स्वस्य प्राणं वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्या मूर्ध्न्याधाय संस्थाप्यात्मनो योगधारणामास्थित आरूढो धारयितुं प्रवृत्तः समाध्यर्थमुद्युक्तः ॥ १२ ॥
ओमिति, एकं च तदक्षरं चैकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतं व्याह-

रन्नुच्चरंस्तदर्थभूतं मामीश्वरञ्चानुस्मरन्ननुचिन्तयन् देहं त्यजन् यः प्रयाति स परमां गतिं याति मां प्राप्नोतीत्यर्थः । १३ ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ ! नित्ययुक्तस्य योगिनः ॥ १४ ॥

नान्यविषये चेतो यस्य सोऽनन्यचेता यो योगी मां सततं निरन्तरं सदा नित्यशो दीर्घकालपर्यन्तं स्मरति तस्य नित्ययुक्तस्य सदा समाहितचित्तस्य योगिनोऽहं सुलभः सुखेन लभ्योऽस्मि हे पार्थ ! तस्मादनन्यचेताः सन् सदा मयि समाहितो भवेदिति ॥१४॥

त्वल्लाभे च किं स्यात्तदाह—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

महात्मानः शुद्धसत्त्वा मामुपेत्य प्राप्येश्वरमनुभूय परमां संसिद्धिं मोक्षं गताः प्राप्ताः सन्तो दुःखालयं सर्वदुःखाश्रयमशाश्वतमनवस्थितस्वरूपं पुनर्जन्म पुनरुत्पत्तिं नाप्नुवन्ति, जन्मपुनर्नाप्नुवन्तीति भावः ॥ १५ ॥

एतदेव सर्वेष्वपि लोकेषु पुनरावृत्तिं दर्शयन्निर्धारयति—

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ॥ १६ ॥

हे अर्जुन ! आब्रह्मभुवनात्—भवन्ति भूतानि यत्र तद्भुवनं लोकः, अभिविधावाकारस्तेन ब्रह्मलोकसहिता लोकाः सर्वे पुनरावर्तिनः पुनराऽऽवर्तिस्वभावाः सन्ति मामीश्वरमुपेत्य तु हे कौन्तेय ! पुनर्जन्म पुनरावृत्तिर्न विद्यते, ये हि क्रममुक्तिफलाभिरुपासनाभिर्ब्रह्मलोकं प्राप्तास्तेषां तत्रोत्पन्नज्ञानानां ब्रह्मणा सह मोक्षः नान्येषां ब्रह्मलोकस्यापि विनाशित्वादित्यादिः ॥ १६ ॥

कालपरिच्छिन्नत्वेनोक्तं पुनरावर्तित्वं दर्शयति—

**सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

सहस्रं युगानि चतुर्युगानि दिव्ययुगानि वा पर्यन्तोऽवसानं यस्याह्नस्तदहः सहस्रयुगपर्यन्तं यदहो ब्रह्मणो ये योगिनो विदुर्ये च सहस्रयुगपर्यन्तां ब्रह्मणो विराजः प्रजापते रात्रिं विदुस्त एवाहो-रात्रविदो जनाः सन्ति न तु मनुष्यदिनरात्रकालविदः, यतश्च कालपरिच्छिन्नास्तेऽतश्च पुनरावर्तिन इति, "चतुर्युगसहस्रं तु ब्रह्म-णो दिनमुच्यते" इति पुराणवचनादत्रयुगशब्दश्चतुर्युगपर इति ॥१७॥

अहोरात्रकार्यमाह—

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**

अव्यक्तात् प्रजापतेः स्वापावस्थातो व्यक्तयो व्यज्यन्त इति व्यक्तयः स्थावरजङ्गमलक्षणाः सर्वाः प्रजा ब्रह्मणोऽह्न आगमेऽहरा-गमे काले भवन्ति, रात्रेरागमे रात्र्यागमे काले ब्रह्मणः स्वापकाले तत्रैवाव्यक्तसंज्ञके प्रजापतौ स्वापावस्थे सर्वा व्यक्तयः प्रलीयन्ते तिरोभवन्ति, अव्यक्तमत्र ब्रह्मण स्वापावस्था सूक्ष्मशरीरं नाव्या-कृतं दैनंदिनसृष्टिप्रलयोरेव प्रस्तुतत्वादाकाशादेः सृष्टेरनुक्तेः ॥१८॥

अकृताभ्यागमादिदोषपरिहारवैराग्याद्यर्थमाह—

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ ! प्रभवत्यहरागमे ॥ १९ ॥**

यो भूतग्रामो भूतसमुदायः पूर्वकल्पे आसीत्स एवायं नान्योऽ-हरागमेऽवशः सन् भूत्वा भूत्वा रात्र्यागमे प्रलीयते हे पार्थ ! स एव पुनरहरागमे प्रभवति पुनस्तथैवेति ॥ १९ ॥

"अक्षरं ब्रह्म परमम्" इत्युपक्रम्य "ओमित्येकाक्षरं ब्रह्म"त्यादिना तत्प्राप्त्युपाय उपदिष्ट "आब्रह्मभुवनाल्लोकात्पुनरावर्तिन" इति च व्याख्यातमधुना मामुपेत्य पुनर्जन्म न विद्यत इति व्याचक्षाणः प्राप्यस्याक्षरस्य स्वरूपमाह—

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

तस्मादव्यक्तात् पूर्वोक्ताद्धिरण्यगर्भात् स्थूलभूतग्रामबीजभूतात्तु परोऽतिभिन्नः श्रेष्ठोऽन्योऽत्यन्तविलक्षणोऽव्यक्तोऽतीन्द्रियः सनातनश्चिरन्तनो नित्यो भावोऽक्षरः परमात्मा योऽस्ति स सर्वेषु भूतेषु हिरण्यगर्भान्तेषु नश्यत्स्वपि न विनश्यति, तस्मात् तत्प्राप्तिमानपि न नश्यतीति सिद्धम् ॥ २० ॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

योऽसावव्यक्तोऽक्षर इत्युक्तस्तमव्यक्तमक्षरं श्रुतयः परां गतिमाहुः, "पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः" इत्यादयः, यं पुरुषमव्यक्तभावं प्राप्य गत्वा पुनः संसाराय न निवर्तन्ते, तत् परमं सर्वोत्कृष्टं मम विष्णोः परब्रह्मणो धाम स्थानं परमं पदं स्वरूपमस्ति ॥ २१ ॥

तत्प्राप्तेरव्यभिचारिसाधनमाह—

पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥

हे पार्थ ! यस्य पुरुषस्य पूर्णस्य परमात्मनोऽन्तःस्थानि मध्ये वर्तमानानि सर्वभूतानि सर्वाणि कार्याणि सन्ति कारणान्तर्वर्तित्वात्

कार्यस्य, येन च पुरुषेणेदं सर्वं जगत् ततं व्याप्तमस्ति यथाकाशेन घटादि, स परो निरतिशयः पुरुषः परमात्माऽनन्यया न विद्यतेऽन्यो विषयो यस्यां तया ज्ञानलक्षणया भक्त्या परप्रेमरूपयैव लभ्योऽस्ति नान्यथा ॥ २२ ॥

आत्मज्ञभिन्नध्यानयोगिकर्मयोगिमार्गप्रदर्शनार्थमाह—

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ! ॥ २३ ॥

यत्र काले प्रयाता यस्मिन् कालाभिमानिदेवतोपलक्षिते मार्गे मृता गता योगिनः क्रममुक्तिफलध्यानयोगिनः प्रणवादिद्वारेणोपासका अनावृत्तिमपुनरावृत्तिं यान्ति, कर्मयोगिनश्चावृत्तिं यान्ति तं कालं वक्ष्यामि कालाभिमानिदेवं कथयिष्यामीत्यर्थः ॥ २३ ॥

तत्रानावृत्तिकालमाह—

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

अत्राग्निज्योतिरादिसर्वे शब्दाः कालादितत्तदभिमानिदेवानां-वाचकास्तैश्च मार्ग उपलक्ष्यते, "आतिवाहिकास्तल्लिङ्गा"दिति न्यायात्, अत्र चाग्निज्योतिरादीनां कथनं श्रुत्युक्तानामन्येषामप्युपलक्षणं, तेन तत्राऽग्न्यादिसर्वदेवोपलक्षिते मार्गे प्रयाता मृत्वा गता ब्रह्मविदो ब्रह्मोपासनपरा जना ब्रह्म गच्छन्ति क्रमेण ज्ञानं लब्ध्वेति भावः ॥ २४ ॥

देवयानस्तुत्ये पितृयानमार्गमाह—

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

धूमरात्रिकृष्णपक्षदक्षिणायनाभिमानिदेवतोपलक्षितो यो मार्गस्तत्र मृतः कर्मयोगी चन्द्रमसि भवं चान्द्रमसं ज्योतिः फलं प्राप्य तत्क्षयान्निवर्तते, अत्रापि धूमादिकथनं श्रुतिप्रोक्तानामुपलक्षकम् ॥ २५ ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥

ज्ञानप्रकाशमयत्वाच्छुक्ला तमोमयत्वात्कृष्णा शुक्लकृष्णे एते गती मार्गौ शाश्वते नित्ये अनादी मतेऽभिप्रेते संसारस्यानादित्वात्, कस्येति चेज्जगत इत्यधिकृतानां ज्ञानकर्मणोर्न सर्वस्य जगतो गती सम्भवतः, तत्रैकया शुक्लया गत्या कश्चिदनावृत्तिं याति, अन्यया कृष्णया सर्वः पुनर्भूय आवर्तते ॥ २६ ॥

नैते सृती पार्थ ! जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ! ॥२७॥

हे पार्थ ! एते सृती मार्गौ जानन् संसारायैका मोक्षायान्या चेति विवेकेन पश्यन् योगी ध्यानयोगी कश्चन कश्चिदपि न मुह्यति केवलं कर्म धूमादिमार्गप्रापकं कर्तव्यत्वेन न प्रत्येति, तस्मात् हे अर्जुन ! सर्वेषु कालेषु त्वमपि योगयुक्तः समाहितो भवापुनरावृत्त्यै ॥ २७ ॥

श्रद्धावृद्ध्यर्थं योगमाहात्म्यमाह—

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥२८॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे महापुरुषयोगो ( अक्षरब्रह्मयोगो ) नामाष्टमोऽध्यायः ॥ ८ ॥

वेदेषु सम्यगधीतेषु यज्ञेषु साद्गुण्येनानुष्ठितेषु तपःसु सुतप्तेषु दानेषु सम्यग् दत्तेषु यत् पुण्यस्य फलं स्वर्गादि शास्त्रेण प्रदिष्टमुपदिष्टं तत्सर्वं फलमत्येत्यतिक्रामति ध्यानयोगी, इदं सप्तप्रश्ननिर्णयद्वारेणोक्तं तत्त्वं विदित्वा सम्यगवधार्यानुष्ठाय परं प्रकृष्टमैश्वरं स्थानमाद्यं सर्वकारणं ब्रह्मोपैति च प्रतिपद्यते चेति ॥ २८ ॥

अधिभूतादिकं ज्ञात्वा त्वक्षरं परमं हरिम् ।
परं ब्रह्म विदित्वैव तद्योगो विदुषो भवेत् ॥ १ ॥
अक्षरं मायया ब्रह्म महापुरुषतां व्रजेत् ।
योगेन तदुपासीना व्रजन्ति तत्स्वरूपताम् ॥ २ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायामष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः ( ९ )

अष्टमेऽध्याये देवयानमार्गेणापुनरावृत्तिमुक्तवान्, तत्र तेनैव प्रकारेण मोक्षः स्यान्नान्यथेति शङ्कामपनुदन्—

श्रीभगवानुवाच

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

इदं पूर्वोक्तेष्वध्यायेषूक्तं वक्ष्यमाणं च बुद्धौ कृत्वेदमित्याह, तुशब्दो ध्यानाज्ज्ञानस्य वैलक्षण्यद्योतनार्थः, इदमेव सम्यग् ज्ञानं साक्षान्मोक्षसाधनमात्मैवेदं सर्वमित्यादि श्रुतिप्रतिपादितं विज्ञानेन सहितं विज्ञानसहितं ब्रह्मानुभवपर्यन्तमत एव गुह्यतमं गुह्यगुह्यतरकर्मोपासनाज्ञानेभ्योऽप्यतिगुह्यमनसूयवे गुणेषु दोषाविष्करणशून्याय ते तुभ्यमहं वक्ष्यामि, यज्ज्ञानं ज्ञात्वा लब्ध्वाऽशुभात्संसारबन्धनान्मोक्षसे "न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि । नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ।" तद्युक्तोऽनसूयुः कथ्यते ॥ १ ॥

तज्ज्ञानं स्तौति—

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

विद्यानां राजा राजविद्यं दीप्त्यतिशयत्वात्, गुह्यानां राजा परमसुकृतसाध्यत्वेन बहुभिरज्ञातत्वात्, उत्तमं पवित्रं समूलसर्वपापनाशकत्वात्, प्रत्यक्षेण सुखादेरिवावगमो भानं फलं च यस्य तत्प्रत्यक्षावगमं, धर्म्यं धर्मादनपेतम्, सुसुखं कर्तुं गुरूपदेशेन सुखेन सम्पादयितु शक्यम्, फलतोऽव्ययमक्षयफलं सुकरत्वेऽपि

नास्य फलं कर्मफलवन्नश्यति तस्मात्सर्वोत्कृष्टत्वादिदमात्मज्ञानमेव श्रद्धेयम्, श्रद्धयाऽवश्यमेव सम्पाद्यमस्तीति ॥ २ ॥

अन्वयमुखेन स्तुत्वा व्यतिरेकमुखेन स्तौति--

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ! ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

अस्योक्तस्य धर्मस्य ज्ञानविज्ञानस्य स्वरूपे साधने फले चाश्रद्दधानाः श्रद्धारहिता नास्तिकाः पापकारिणः पुरुषा मामीश्वरं तत्प्राप्तिसाधनं चाप्राप्यैव हे परन्तप ! मृत्युयुक्तस्य संसारस्य वर्त्मनि नरकादिप्राप्तिमार्गे निवर्तन्ते निश्चयेनावर्तन्ते, मामप्राप्येत्यस्य मत्प्राप्तिमार्गसाधनविशेषभक्तिमात्रमप्यप्राप्येत्यर्थः ॥ ३ ॥

स्तुत्या श्रोतारमभिमुखीकृत्य तदेवाह—

मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

अव्यक्ता करणाविषयो मूर्त्तिः स्वरूपं यस्य सोऽव्यक्तमूर्त्तिस्तेन मया सच्चिदानन्दस्वरूपेण परमात्मनेदं सर्वं जगत् ततं व्याप्तमस्ति न त्वनेन व्यक्तेन देहादिना तस्मिन्नधिष्ठानस्वरूपेऽव्यक्तमूर्त्तौ मयि स्थितानि मत्स्थानि सर्वभूतानि सन्ति परमात्मसत्ताप्रकाशाभ्यां विना तेषां स्थित्याद्यसंभवात्, अहं तु सङ्गादिरहितत्वाद्विभुत्वाच्चाधेयत्वेनावस्थितो नास्मि ॥ ४ ॥

ममासंसर्गित्वाज्जगतश्च मिथ्यात्वादेव—

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

भूतानि स्थावरजङ्गमानि वस्तुतो न च मत् स्थानि सन्ति रज्जौ

सर्प इव, ममैश्वरमीश्वररचितं योगं युक्तिं घटनामात्मनो याथात्म्यं पश्य. "असङ्गो नहि सज्जते" इति श्रुतिः। इदं चान्यदाश्चर्यं पश्य, भूतभृन्न च भूतस्थो ममात्माऽसङ्गित्वात्तथापि भूतभावनोऽस्ति, भूतानि बिभर्ति धारयति पोषयत्युपादानतयेति भूतभृद् भूतानि भावयति कर्तृतयेति भूतभावनः, ममात्मेति राहोः शिर इतिवत् प्रयोगः ॥ ५ ॥

असंश्लिष्टयोरप्याधाराधेयभावं दृष्टान्तेनाह—

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

यथा लोके आकाशस्थितोऽसङ्गस्वभावेऽप्याकाशे स्थितो नित्यं सदोत्पत्त्यादिषु कालेषु, वातीति वायुः सदा चलस्वभावोऽत एव सर्वत्र गच्छतीति सर्वगः परिमाणतो महानपि सदाऽऽकाशेऽचले तिष्ठति तथाप्याकाशेन सह न संश्लिष्यते तस्यासङ्गित्वात्तथा सर्वाणि महान्ति सूक्ष्माणि भूतानि मत्स्थानि मय्यसङ्गेऽसंश्लेषेणैव स्थितानि सन्तीत्युपधारय निश्चयेन जानीहि ॥ ६ ॥

स्थितिकाले सदृष्टान्तमसङ्गत्वमुक्त्वा प्रलयोत्पत्तिकालेऽपि स्वस्मिन् स्थितिं वक्तुं स्वाधीनप्रकृतौ सर्वेषां लयं स्वस्मादुत्पत्तिं चाह—

**सर्वभूतानि कौन्तेय ! प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**

हे कौन्तेय ! कल्पक्षये प्रलयकाले सर्वाणि भूतानि मामिकां मदीयां मदधीनां प्रकृतिं त्रिगुणात्मिकामपरां यान्ति तत्र लीयन्ते, पुनस्तानि भूतानि कल्पादौ सर्गकालेऽहं विसृजामि पूर्ववद्विभागेनोत्पादयामि ॥ ७ ॥

सृष्टौ मायामयत्वादिप्रकाशनायाह—

प्रकृतिं स्वामधिष्ठाय विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

अविद्यालक्षणां प्रकृतिं स्वां त्रिगुणात्मिकां मायामधिष्ठायावष्टभ्य वशीकृत्यैव प्रकृतेर्वशात् स्वभाववशादविद्यादिप्रभावादवशमस्वतन्त्रमिमं भूतग्रामं भूतसमूहं कृत्स्नमखिलमहं पुनः पुनः सृजामि, अनेन संसारस्यानादित्वं सूचितम् ॥ ८ ॥

विषमसर्गनिमित्तं धर्माधर्मादिप्रसङ्गमाशङ्कयाह—

न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ! ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥

हे धनञ्जय ! तानि विषमसर्गनिमित्तानि कर्माणि मामीश्वरं न निबध्नन्ति, न दोषभागिनं कुर्वन्ति, अबन्धकत्वे हेतुमाह—उदासीनवदुपेक्षकवदासीनमात्मनोऽविक्रियत्वादत एव तेषु सृष्ट्यादिषु कर्मस्वसक्तं फलरागाभिमानरहितम्, जीवकर्मकामवासनाद्यनुसारेण सृष्ट्यादिकर्तृत्वेऽपि सङ्गाभावाद्यथा नेश्वरो बध्यते तथैवान्योऽपि सङ्गादिरहितो न बध्यत इति ॥ ९ ॥

भूतग्राममिमं विसृजाम्युदासीनवदासीनमिति च विरुद्धमिति चेदाह—

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय ! जगद्विपरिवर्तते ॥ १० ॥

मयाऽविक्रियस्वरूपेणाध्यक्षेण स्वामिना सन्निधिमात्रेण चुम्बकवत्प्रवर्त्तकेण प्रवर्त्तिता प्रकृतिस्त्रिगुणात्मिकाऽविद्यालक्षणा माया चराचरसहितं जगत् सूयत उत्पादयति, तथा च मन्त्रवर्णः

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताऽधिवासः साक्षी चेता केवलो निर्गुणश्च" हे कौन्तेय ! अनेनाध्यक्षत्वेन हेतुना निमित्तेन सचराचरं जगद्विपरिवर्तते विविधं परितः सर्वास्ववस्थासु जन्मादिषु वर्तते "अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्, अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते" तस्मादुदासीनस्यापि सूर्यादिवत् प्रकाशकत्वेन सत्ताप्रदत्वेन कारणत्वं न विरुध्यत इति ॥ १० ॥

इत्थं भूतं परमेश्वरं किमिति जना नाद्रियन्त इति चेदाह—

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥

मूढा अविवेकिनो मानुषीं तनुमाश्रितं मनुष्यदेहेन व्यवहरन्तं मनुष्यसम्बन्धिनं देहमाश्रितं ज्ञेयध्येयात्मतया प्राप्तुं योग्यं मां नित्यशुद्धबुद्धमुक्तस्वभावं सर्वात्मानमीश्वरमवजानन्ति-अवज्ञां कुर्वन्ति ध्यानविवेकचिन्तनादिकं न कुर्वन्ति यतस्ते मम परं भावं प्रकृष्टं परमार्थतत्त्वमजानन्तः सर्वभूतानां महान्तमीश्वरं स्वमात्मानमजानन्तोऽत एवावजानन्ति तदेवोचितमेव मूढानामिति ॥ ११ ॥

ममावज्ञया सर्वपुरुषार्थहीनास्ते भवन्तीत्याह—

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

सर्वात्मेश्वरविमुखत्वान्मोघा व्यर्था आशा आशिषः फलप्रार्थना येषां ते मोघाशा मोघानि निष्फलानि कर्माणि येषां ते मोघकर्माणो मोघं ज्ञानमपि येषां ते विचेतसो विगतविवेका भवन्ति, किञ्च राक्षसीं तामसीमासुरीं राजसीं मोहिनीं मोहकरीं प्रकृतिं स्वभावं श्रिता हिंसादिपरायणा भवन्ति ततश्च "त्रिविधं नरकस्येदं

द्वारम्" इत्युक्तरीत्या नरकद्वारभागितया दुःखिनो भवन्ति । "धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्" ॥ ( इति भागवते ) ॥ १२ ॥

के पुनस्त्वां भजन्त इति तत्राह—

महात्मानस्तु मां पार्थ ! दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥१३॥

हे पार्थ ! दैवीं सात्त्विकीं प्रकृतिं स्वभावं शमदमदयादिलक्षणामाश्रिता महात्मानो महान् संस्कृत आत्मान्तःकरणं येषां तेऽनन्यचित्ताः सन्तो भूतादिं भूतानामादिमाश्रयमादिकारणं सर्वजगद्धेतुमव्ययमविनाशिनं मां ज्ञात्वा तु मामेवेश्वरं सर्वात्मानं भजन्ति ॥ १३ ॥

भजनप्रकारमाह द्वाभ्यां श्लोकाभ्याम्—

सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥१५॥

सततं निरन्तरं सदा ब्रह्मस्वरूपं मां कीर्त्तयन्तः श्रवणकथनादिकं कुर्वन्तः शमदमाहिंसादिसाधनैर्यतन्तो यत्नं कुर्वन्तो मननपरायणा अत एव दृढव्रता दृढं शमादिव्रतं येषां ते नित्ययुक्ता नित्यसमाहिताः सन्तो भक्त्या मां नमस्यन्तो मामुपासते नमस्यन्तश्चेति चकारात् "श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।

अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" इत्यस्योपलक्षणं, गुरुरूपे च भगवति पादसेवनमर्चनादि सर्वं सम्भवत्येव भक्त्या नित्ययुक्ताश्चेति सम्बध्यते, तेन सर्वसाधनपौष्कल्यं प्रतिबन्धकाभावश्च लभ्यते "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" ॥ "ततः प्रत्यक् चेतनाधिगमोऽप्यन्तरायाभावश्च" इत्यादिशास्त्रात् ॥१४॥ सामान्येनोपासनाप्रकारमुक्त्वा विशेषेणाह—ज्ञानयज्ञेनेति ज्ञानमेव परमात्मविषयं यज्ञस्तेन यजन्तः पूजयन्तोऽन्य उत्तमा मामुपासते, अपि शब्दोऽन्योपासनापरित्यागार्थः, चकारः साधारणोपासनाप्रकारसमुच्चयार्थस्तच्च ज्ञानमेकत्वेनैकमेव परं ब्रह्मेति तेन परमार्थदर्शनेन यजन्तो मामुपासते केचित्, केचिच्च पृथक्त्वेन स एव भगवान् विष्णुरादित्यचन्द्रादिरूपेण पृथक् पृथगवस्थित इति मध्यमा उपासते, केचित्तु बहुधावस्थितो विश्वतोमुखो विश्वरूपः स एव भगवानिति मत्वा विश्वतोमुखं सर्वतोमुखं बहुधोपासते ॥ १५ ॥

यदि बहुधोपासते तर्हि कथं त्वामेवोपासत इत्याकाङ्क्षायामाह सर्वात्मत्वमात्मनः—

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥

अहं क्रतुः श्रौतकर्मभेदः, अहमेव यज्ञः स्मार्तकर्मभेदो वैश्वदेवादिः, स्वधा पितृभ्यो दीयमानमन्नम्, औषधं साधारणमन्नं भेषजं वा, मन्त्रो येन पितृभ्यो देवेभ्यश्च हविर्दीयते याज्यादिः, आज्यं घृतमन्यच्च हविः, अग्निर्हवनाधारः, हुतं हवनकर्म चाहमेव सर्वमस्मि ॥ १६ ॥

किञ्च—

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥१७॥
गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ! ॥१९॥

अस्य सर्वस्य जगतः पिता जनयिता, माता जनयित्री, धाता कर्मफलस्य प्राणिभ्यो विधाता पोषकः, पितामहः पितुः पिता, वेद्यं वेदितव्यं ब्रह्मादि, पवित्रं पावनं यज्ञदानादि, ओंकारादिश्चाहमेव ज्ञानसाधनम् ॥ १७ ॥ गम्यत इति गतिः सात्त्विकादि कर्मादिफलम्, भर्त्ता पोषकः कर्मफलदानेन, प्रभुः स्वामी-नियन्ता, साक्षी शुभाशुभद्रष्टा, निवास आश्रयो भोगस्थानं, शरणं प्रपन्नार्तिहर्त्ता रक्षकः, सुहृत्-निरपेक्षोपकारी, प्रभव उत्पत्तिः स्रष्टा वा, प्रलयः प्रलयाश्रयः संहर्त्ता वा, स्थानं स्थित्याश्रयः, निधानं निधीयते निक्षिप्यते कालान्तरोपभोग्यं कर्मफलमस्मिन् तत् शङ्खपद्मादिनिधिर्वा, बीजं प्ररोहधर्मिणां प्ररोहकारणम्, अव्ययं यावत्संसारभावित्वान्नह्यबीजं किञ्चित्प्ररोहति नित्यं च प्ररोहदर्शनाद्बीजसंततेर्नित्यत्वं तत्सर्वमहमेव ॥ १८ ॥ अहमादित्यो भूत्वा कैश्चिद्रश्मिभिस्तपामि, कैश्चिच्च किरणैः वर्षं गृह्णामि पूर्ववृष्टं रसमाकर्षामि, पुनः कैश्चित् किरणैर्निगृहीतं रसमुत्सृजामि, अहमेवामृतं जीवनं मृत्युर्मरणम्, सद् व्यक्तं कार्यं वर्तमानम्, असदव्यक्तं कार्यमवर्तमानमेतत्सर्वमहमेवातः पृथक्त्वेन ये भजन्ते ते यथाज्ञानं मामेव भजन्ते ॥१९॥